पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन आदर्शशोधसंस्थानमिति सम्मानितम्

श्रीगङ्गेशोपाध्यायविरचितं

# व्याप्तिपञ्चकम्

गादाधरी-जागदीशीटीकाभ्यां
टिप्पण्या च सहितम्

टिप्पणीप्रणेता
**विद्वान् अ. हरिदासभट्टः**
प्रांशुपालः, पूर्णप्रज्ञविद्यापीठसंस्कृतमहापाठशाला,
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२०११

**Poornaprajna Samshodhana Mandiram**
Recognised as Adarsha Shodha Sansthan by Rashtriya Sanskrit Samsthan,
Deemed University, Ministry of H.R.D., Govt. of India, New Delhi

# VYĀPTIPAÑCAKAM

with the commentaries of
Śri Gadādhara Bhaṭṭācārya and Śri Jagadīśa Bhaṭṭācārya
and sub-commentary

*Sub Commentary by*
**Prof. A. Haridasa Bhat**
Dept. of Navyanyāya
Poornaprajna Vidyapeetha Sanskrit College,
Poornaprajna Vidyapeetha, Bangalore

***Publisher :***
Poornaprajna Samshodhana Mandiram
**Poornaprajna Vidyapeetha,**
**Bangalore - 560 028**

2011

Poornaprajna Samshodhana Mandira Grantamālā - 8

**VYĀPTIPAÑCAKAM** with the commentaries of Śri Gadādhara Bhaṭṭācārya and Śri Jagadīśa Bhaṭṭācārya and Sub-Commentary

*Sub Commentary by* **Prof. A. Haridasa Bhat**

*Published by :.*
**Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Bangalore - 560 028.

First Edition : 2002
Second Edition : 2011

Copies : 1000

Price : Rs. 100/-

*This publication is brought out by the generous financial help of*
**Rashtriya Sanskrit Samsthan, (Deemed University), New Delhi**

*Type setting :*
**Poornaprajna Samshodhana Mandiram**
**Poornaprajna Vidyapeetha, Bangalore - 560 028**

*Printed by :*
**Lavanya Mudrana**
Bangalore.

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन आदर्शशोधसंस्थानमिति सम्मानितम्

श्रीगङ्गेशोपाध्यायविरचितं

# व्याप्तिपञ्चकम्

गादाधरी-जागदीशीटीकाभ्यां
टिप्पण्या च सहितम्

टिप्पणीप्रणेता
**विद्वान् अ. हरिदासभट्टः**
प्रांशुपालः, पूर्णप्रज्ञविद्यापीठसंस्कृतमहापाठशाला,
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२०११

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला - ८

# व्याप्तिपञ्चकम्

## गादाधरी-जागदीशीटीकाभ्यां टिप्पण्या च सहितम्

टिप्पणीप्रणेता- विद्वान् अ. हरिदासभट्टः
प्रांशुपालः, पूर्णप्रज्ञविद्यापीठसंस्कृतमहापाठशाला,
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

प्रथममुद्रणम् - २००२
द्वितीयमुद्रणम् - २०११

मुद्रितपुस्तकसङ्ख्या - १०००

मूल्यम्- १००/- रूप्यकाणि

लावण्यमुद्रणालये मुद्रितम् ।

# समर्पणम्



सुमधुरग्रन्थकुसुममिदं सच्छास्त्ररसास्वादने

चञ्चरीकायमानमानसानां

**श्रीविश्वेशतीर्थश्रीपादानां** चरणयोः

चित्रभानुसंवत्सरस्य भाद्रपदबहुलद्वितीयायां बेङ्गलूरुनगरे

तेषां ६४तमचातुर्मास्यशुभावसरे सम्पन्नायां

विद्वद्गोष्ठ्यां समर्पितम्

# आशीर्वचनम्

न्यायशास्त्रं सर्वशास्त्रोपकारकमिति प्रथितम् । न्याय-शास्त्राध्ययननिशितेनैव मानसेनासिना वयं समस्ता अपि शास्त्रीयसमस्या निरस्यामः । अतः सकलदर्शनविद्यार्थिभिरपि निजमनीषायाः निकषायितं न्यायशास्त्रमवश्यम् अध्येतव्यम् । अस्मत्प्रियशिष्येण, न्यायवेदान्तवैदुष्येन सकलभारतप्रथितयशः-पुञ्जेन, अनेककृतिकुसुमकुञ्जेन, पण्डितकुञ्जरेण हरिदासभट्ट-महोदयेन छात्राणाम् उपकारिण्या सरलसरण्या सुलभविवरण-पुरःसरं ग्रथितामिमां जागदीशी-गादाधरीपञ्चलक्षणीव्याख्यां दर्शं दर्शं नितरां प्रहृष्यामः । हरिदासभट्टः शास्त्राध्येतॄणां मानसकुसुमानि स्वकीयकृतिकिरणैः निरन्तरं विकासयतु इति आशास्महे ।

इत्यनेकनारायणस्मृतयः

दि. २०.०९.२००२

पूर्णप्रज्ञविद्यापीठम्

बेङ्गलूरु.

**श्रीविश्वेशतीर्थश्रीपादाः**

पेजावराधोक्षजमठाधीशाः, उडुपि

---

ग्रन्थोऽयं द्वितीयमुद्रणपदमधिरूढमिति सामोदमभिनन्दामहे ।

दि. २०.१२.२०१०

पूर्णप्रज्ञविद्यापीठम्

**श्रीविश्वेशतीर्थश्रीपादाः**

# निवेदनम्

विद्वद्वर्यैः हरिदासभट्टाचार्यैः प्रणीतया व्याख्यया समलङ्कृता पञ्चलक्षणी-गादाधरी जागदीशी च विदुषां करकमलयोरुपायनीक्रियत इति निवेदयितुं मोमुद्यते मे चेतः। 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति वदद्भिः दर्शनविशारदैः कणादगोतमप्रणीततर्कशास्त्रस्य सर्वाध्येयता सर्वोपादेयता च प्रतिपादिता। शास्त्रान्तरप्रमेयप्रक्रियाविमर्शोऽपि दुश्शक एव न्यायशास्त्राध्ययन-विधुराणां विदुषामित्यतिरोहितम्। यद्यपि वेदान्तिभिः 'शुष्कतर्कं तु वर्जयेत्' इत्याघोषयद्भिः कणादगोतमप्रणीततर्कशास्त्रस्य निरङ्कुशं प्रामाण्यं नेष्यते, अपि तु भगवता विष्णुना समीरितस्य ब्रह्मतर्कस्यैव। प्रमेयव्यवस्थायाम् इदमेव परमं प्रमाणमिति वेदान्तविदां निर्णीतः पन्थाः। उक्तं च स्मृतौ- 'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितम्' इति। 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः। मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम्॥' इति च।

तथापि मणिदीधितिकारादिभिः प्रदर्शितस्य परिष्कारप्रचुरस्य तर्कशास्त्र-विचारक्रमस्य चतुर्दशशतकमारभ्य सर्वैर्दार्शनिकैः स्वीयग्रन्थेषु आदृतत्वेन मणिदीधितितद्व्याख्यानानामध्ययनम् अपरिहार्यम्। व्याख्याननैरपेक्ष्येण न्यायशास्त्राध्ययनमध्यापनं चातीव दुष्करम्। व्याख्याऽपि पञ्चलक्षण्याः प्रेप्सितासीत् विदुषां विद्यार्थिनां च। सेयमिच्छा हरिदासभट्टाचार्यकृत-व्याख्यया पूर्णतां गता। यद्यपि गदाधरभट्टाचार्यप्रणीतव्याख्यायाः जटिलायाः विवृतिः प्राचीनैरर्वाचीनैश्च कृतोपलभ्यते। तथापि व्याख्येयं मूलपदवाक्यार्थ-विवृतिरूपाऽथ चोपलब्धव्याख्यानेष्वनुपलभ्यमानसूक्ष्मवाक्यार्थविशदनपरा च विराजते। अत्र तु विद्यार्थिनामुपकृतये पारिभाषिकपदव्याख्या प्रदत्ता। स्पष्टतार्थं चित्रलेखन (Diagram) पुरस्सरं प्रक्रियाविवृतिश्च कृता। महदिदं वैशिष्ट्यमस्य प्रकाशितग्रन्थस्य यत् समेषां सुखबोधार्थं श्रमः स्वीकृत इति। नितान्तश्रमसाध्यस्य सूक्ष्मेक्षिकामात्रगम्यस्य दुर्ज्ञेयस्य तर्कशास्त्रस्य ललित-व्याख्यानाभावात् तर्कशास्त्रस्याध्ययनपरम्परैव प्राय इदानीं भारतदेशे उच्छिन्नेव दृश्यते। हरिदासभट्टाचार्यैः गादाधर्याः व्याख्याप्रणयनेन सेयं पाठप्रवचनपरम्परा समुज्जीविता। उपकृतश्च विदुषां समवायः। अनुगृहीताश्छात्राः। परितुष्टाश्च

गुरवः। नितान्तं वयमधमर्णाः तेषामुपकारेण। पाठे, प्रवचने, ग्रन्थनिर्माणे, वाक्यार्थे चेति चतुर्षु चतुरस्रं सर्वदुर्लभं बहुपुण्यलभ्यं पाण्डित्यं सम्पादितं हरिदासभट्टाचार्यैः। एतादृशग्रन्थप्रणयनपरम्परया अस्मान् सदाऽनुगृह्णन्तु इति प्रार्थयामहे । प्रणतिभिरेवानृण्यं व्याहरामः ।

संशोधनमन्दिरस्यास्य अध्यक्षाः नैकविद्वद्रत्नानामुदधिरिवाश्रयभूताः श्रीमन्तः पेजावरमठाधिपाः श्रीविश्वेशतीर्थश्रीमच्चरणाः सर्वदापि अस्मान् सन्मार्गे नयन्तः सन्त्यनुग्राहकाः। तदीयकृपयैव सर्वं ज्ञानकार्यमत्र प्रचलति। अप्रकाशित-ग्रन्थानां प्रकाशने विचारगोष्ठीसमायोजने शास्त्रवाक्यार्थविमर्शकर्मणि बद्धादरा गुरुचरणाः । गुरुचरणप्रदत्तेन ज्ञानवित्तेन बाह्यवित्तेन च ग्रन्थाः मुद्राप्यन्त इह। केवलाभिर्वाग्भिरेव तदीयोपकृतिं सर्वदा स्मरन्तः 'भवाम ऋणिनो वयम्' इति कार्तज्ञ्यमावेदयामः। तेभ्य अनन्ताः प्रणतिततीः समर्पयामः।

तथैव विद्वन्मान्याः नैकशास्त्रविशारदाः विनयादिगुणविभूषिताः संशोधन-मन्दिरस्य भूतपूर्वनिदेशकाः, अधुना तिरुपतिराष्ट्रियसंस्कृतविद्यापीठकुलपति-पदमलङ्कुर्वाणाः पण्डितप्रवराः श्रीमन्तः प्रह्लादाचार्यवर्याः आङ्गलभाषायामुपोद्घातं विरचय्यास्माननुगृहीतवन्तः । तेभ्योऽपि प्रणतिततीः समर्प्य कार्तज्ञ्यं व्याहरामः ।

तथैव तिरुपतिराष्ट्रियसंस्कृतविद्यापीठस्य कुलपतिचराः सकलशास्त्रविशारदाः विद्याविनयसम्पन्नाः रामानुजताताचार्याः, राष्ट्रपतिपुरस्कारभाजः न्यायमञ्जरी-व्याख्याप्रणेतारः विद्वद्वरेण्याः कोत्तमङ्गलं वरदाचार्याश्च सम्मोदप्रकटन-पराभिर्वाग्भिरस्मान् अनुगृहीतवन्तः। तेषाम् अभिवन्दनानि विना न शक्नुमः प्रतिकर्तुम्।

समग्रार्थिकसाहाय्यप्रदानेन श्री ए.वि. गुरुराजराव्महोदयैः ग्रन्थस्यास्य प्रकाशने साह्यमाचरितम्। तेषामधमर्णाः वयम्।

विदुषां चरणरजोरागी

**डा. ए.वि. नागसम्पिगे**

निदेशकः

# शुभाशंसनम्

बेङ्गलूरुनगरस्थपूर्णप्रज्ञविद्यापीठे नव्यन्यायविभागाध्यक्षैः विद्वद्भिः अ. हरिदासभट्टैः विरचितया नूतनया टिप्पण्या सहितः व्याप्तिपञ्चकग्रन्थः आमूलाग्रम् अवलोकितः । एभिः कृतः परिश्रमः नव्यन्यायशास्त्रस्य बोधनायामतीव प्रशंसार्हः । लौकिकशिक्षणक्रमसदृशः कश्चन क्रमः साध्यो वा? इत्यस्मिन् विषये कृतं नूतनं स्वोपज्ञमन्वेषणं छात्रलोके कियद्वा प्रतिष्ठितं भवेदिति निरीक्षणीयम् । निष्क्रियत्वापेक्षया सक्रियत्वं सदा श्लाघामर्हत्येव । जगत्सर्वं परस्परसापेक्षमेवेत्ययमंश एव विज्ञानस्य मूलभूतं तत्त्वम् । एतत्प्रतिपादनमेव न्यायशास्त्रस्य प्रधानोद्देशः । अयमेव निरूप्यनिरूपकभाव इत्युच्यते । एतन्निरूपणाय गणितशास्त्रतुल्या प्रक्रिया एभिर्विद्वद्भिः प्रथममन्विष्टेत्ययमंशो न सामान्यविषयः । प्रथमप्रयत्नत्वात्, पुनः पुनरेतत्परिष्करणे निरन्तर-प्रयासेन क्रमश उत्तमं फलं नूनं लभ्येतेत्यत्र न संशयः ।

संस्कृतविद्या दिनशः क्षीणा दृश्यत इत्ययमंशः प्रामाणिकानां सर्वेषामतीवातङ्ककारीत्यत्र न संशयः । अस्य मूलं किम्? कुत्रास्ति दोषः? कः परिहारः? कथं कार्यावतारः? इत्यादयो विषयाः सत्यप्रेमिभिः सर्वैरपि गाढं चिन्तनीयाः । यद्यपि देवभाषेयं नूनं देवैरेव सुरक्षिता भवेदित्यत्र न संशयो लेशतोऽपि । परं त्वत्र भूसुरम्मन्यानां कर्तव्यम् अस्ति न वा? इतीदं प्रथमं सर्वैरपि भारतीयैरालोचनीयम् । एतद्-दृष्ट्या प्रथमान्वेषणरूपस्यास्य नूतनटिप्पणीप्रक्रियारूपस्य हार्दं स्वागतं व्याहर्तव्यम् । वर्धतामेवमन्वेषणपद्धतिरितोऽपि पुनः पुनः ।

नव्यमङ्गलाभिजनः

**वरदाचार्यः**

# प्रशस्तिः

'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति कश्चित् आभाणकः प्रसिद्धः । तत्र काणादपदं न्यायदर्शनस्याप्युपलक्षणम् । अत एव न्यायवैशेषिकदर्शनयोः समानतन्त्रत्वेन व्यपदेशः न्यायभाष्यादौ । काणाददर्शनं प्रमेयप्रधानम् । न्यायदर्शनं प्रमाणप्रधानम् । तदिदं न्यायदर्शनं प्राचीनन्यायदर्शनं नव्यन्यायदर्शनमिति द्वेधा विभज्य व्यवहरन्ति । गङ्गेशोपाध्यायकृततत्त्वचिन्तामणेः प्राक्तनाः ग्रन्थाः प्राचीनन्याय इति, मणिग्रन्थः ततः पश्चात्तनाः ग्रन्थाश्च नव्यन्याय इति च व्यपदिश्यन्ते । नव्यन्यायग्रन्थेषु कोटिक्रमेण बुद्धितैक्ष्ण्यावहाः दुरूहा विषयाः प्रतिपाद्यन्ते । विशिष्य लक्षणपरिष्कारविषये नव्यन्यायग्रन्थाः सुतरामुपकुर्वन्ति । अत एवेतरशास्त्रकारा अपि नव्यन्यायशैल्याकृष्टचेतसः तच्छैलीमनुसृत्यैव लक्षणादिपरिष्कारं कुर्वन्तीति पश्यामः । तत्र तत्त्वचिन्तामणिः प्रत्यक्षानुमानोपमानशब्दखण्डचतुष्टयात्मकः । अनुमानखण्डे कतिपयभागा एव दीधित्या सह अधीयन्ते । दीधितिश्च संक्षिप्तोक्तावतिदक्षेण रघुनाथशिरोमणिना विरचिता । दीधितेः जगदीशतर्कालङ्कार-गदाधरभट्टाचार्याभ्यां विरचिते व्याख्याने पठनपाठनसम्प्रदाये प्रचरतः ।

अधुनातनानां कोमलमतीनां छात्राणां सुखबोधाय गादाधरीजागदीश्योः विवरणे अपेक्षिते । एतन्मनसि निधाय विद्वद्वरेण्यैः हरिदासभट्टमहोदयैः पञ्चलक्षणीग्रन्थस्य विवरणे विरच्य प्रकाश्येते इति महान् प्रमोदस्य विषयः । पञ्चलक्षणीव्याख्यायां गादाधर्यां जागदीश्यां च यत्र यत्र स्थले क्लेशोऽनुभूयते तत्र सुष्ठु विवरणं तैः कृतमस्ति । तत्र तत्र विषयप्रतिपादनक्रमस्य पट्टिकापि विन्यस्ता ।

तस्मात् अध्यापकानां छात्राणां च सुबोधेयं व्याख्या नितरामुपकुर्यादिति दृढं विश्वसिमि ।

व्याख्याकाराः हरिदासभट्टमहाशयाः न्यायवेदान्तादिशास्त्रेषु सुशिक्षितमतयः सभासु शास्त्रार्थचर्चासु निपुणाः भाषणे लेखने च चतुरा इति बहुवारं मया अवलोकिताः । शास्त्रेषु निशितमतिषु विद्वत्सु कालेऽस्मिन् विरलतामुपगतेषु एतादृशाः दृढव्युत्पत्तिमन्तः युवानो विद्वांसः शास्त्रविद्वत्परम्परां रक्षन्तीति दृष्ट्वा सन्तुष्यामि ।

एते अरोगदृढगात्राः ईदृशान् ग्रन्थान् विरचयन्तः समेधन्तामिति श्रीमद्वेङ्कटाचलनायकं भगवन्तं श्रीनिवासं प्रार्थयमानः आशासे ।

**एन्. एस्. रामानुजताताचार्यः**

प्राक्तनोपकुलपतयः

राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपति

# AN APPRECIATION

The Indian traditional philosophical system holds that the study of *Nyāya* texts, particularly that of the *Navya Nyāya* School, is a must, for pursuing the study of any other philosophical system. The advantages that a student of *Navya Nyāya Shastra,* acquires are many. It will sharpen his intellect and enhance the capacity to analyse critically. It will give him a terminology with which he can express even the most abstract ideas, precisely. It will also enhance the skill needed to take part in shastric dialogues etc. Having in mind these advantages, there is a practice among the traditionalists to encourage the study of *Navya Nyāyavāda Granthas* (dialectical texts), particularly those portions of *Tattva Cintāmaṇi* that deal with *Anumānapramāṇa*, along with the commentary of *Dīdhiti* of *Raghunātha Śiromaṇi* and the sub-commentaries thereon by Gadadhara Bhattācārya, Jagadiśa Tarkālankāra and Mathurānātha Tarka vāgīsa. These sub-commentaries are well known as Gādādharī, Jāgadīśī and Māthuri, respectively.

The view that the study of *Navya Nyāya Śastra,* is a must for any philosophical pursuit in Indian traditional context, is further strengthened by the fact that many prominent Shastric texts, in many branches of traditional learning, including *Vyākaraṇa, Alankāra* and even *Vedānta*, written during 17th and 18th Century onwards, profusely make use of *Navya Nyāya* terminology. *Rasagangādhara* of Jagannātha Pandita, *Kuvalayānanda* of Appayya Diskshita, in Alankara *Ś*astra, *Laghu Manjusha* etc, works in Vyākaraṇa, *Nyāyamṛta, Advaitasiddhi, Gauda Bramhānandī* etc. in *Vedānta*, are a few such works which can not be properly comprehended without a good command over the *Navya Nyāya Śāstra.*

However, as we all know, due to various reasons, the number

of the students taking up the study of the *śāstras*, particularly the *Navya Nyāya Śāstra*, is fast dwindling. If this grim situation is allowed to continue, I am afraid, a day will come when there will be none to offer authentic explanation to the *Navya Nyaya* texts. It has already happened in this country to some other branches of the Śāstric lore. Today, we do not find a scholar who can satisfactorily explain certain texts of Prabhākara Mīmāṁsā and the Bauddha Darśana. The reason is that though those texts are in Sanskrit, due to some unfortunate historical events, the parampara (chain) of teaching and the continuous study of the texts of those schools, was broken and now the style and terminology of these texts appear to us to be very strange. I feel this is high time to take necessary steps to preserve the *Navya* tradition intact. In this direction the commentary on *Pañca-lakṣaṇi Gādādhari Jāgadīśī* by Prof. A. Haridasa Bhat, a Naiyayika to the core, is a welcome venture.

The main hurdle in popularising the study of *Navya Nyāya*, lies in the very method of traditional teaching. As per this method, students, to understand even the very obstruse topics involving highly technical terminology, have to entirely depend upon the oral explanation of the teachers. If the teacher is patient enough and has the rare skill of explaining the very tough shastric concepts in a simple and convincing manner, intelligent students and even above average students would clearly comprehend the shastraic ideas. Since such teachers are rare now, even intelligent students feel it difficult to follow the teaching. It is not the case that this method has no plus points at all. It has certain benefits to offer to the students. Mainly, since the students have to be very attentive to what the teacher is explaining and try to remember all the points made by him, the students will develop concentration and also memory power. It

will also increase the sharpness of their intellect. However, since this method is the main obstacle in attracting even the intelligent students, now *Navya Nyāya* teachers have to look for new methods of teaching.

This exactly has been done by Prof. Haridasa Bhat, in his commentary on Gādādhari and Jāgadīśī of *Pañcalakṣaṇī*. Here he has adopted the method of explaining the very abstract issues through certain symbols. He has been teaching *Navya Nyaya* for nearly two decades. He knows where exactly students become bewildered. He has chosen here certain such complex concepts and has, using the symbols, explained them in an effective manner. In fact, it is not the first time that an attempt is made to explain *Navya Nyāya* concepts through symbols. Prof. V.N. Jha has done it and earlier Prof. Ingalls tried to explain *Pañcalakṣaṇī* using symbols. But, the significance of the attempt made by Prof.A.Haridasa Bhat, is that it is successfully used to teach the students with a traditional background, who otherwise would not have all the benefits of persuing the shastric studies in the traditional environment.

Another significant feature of this commentary is that it aims at explaining and discussing only such ponits which are so far not explained or discussed in other commentaries. The commentator is well aware of the fact that several commentaries are already there for this text which explain the original text in detail. Mahāmahopādhyāya N.S. Ramanuja Tātācārya's commentary is one such. In a very lucid manner Sri. N.S. Ramanuja Tatacharya gives an elaborate exposition of all the points made in the Gādadhari. Prof. Bhat has taken all the care not to repeat what is already said in those commentaries. He explains here in a very simple language, only such words or sentences where further explanation is required. He uses the symbols to

clarify only the technical points which may not be clear to students with the other commentaries. Further, he has also made certain points which are not made by any other commentator. In his brief introduction, Prof. Bhat himself draws our attention to such points. I consider this as the significant contribution of Prof. Haridasa Bhat.

Another unique contribution of Prof. A.Haridasa Bhat here is that he has included both *Gadadhari* and *Jagadishi* on *Pancalakshani*, along with his commentary thereon. As is well known, Gādādharī and Jagadīśī, while interpreting the Tattvacintāmaṇi, differ on several points. Prof. A. Haridasa Bhat not only draws our attention to such differences, but also critically analysing them, states his preference. Thus, Prof. Bhat's commentary, though very brief, compared to other commentaries, is a significant addition to the already existing group of the commentaries on the *Navya Nyaya*.

Prof. A. Haridasa Bhat whom we have seen in many traditional seminars, is gifted with many rare qualities that a Naiyayika should possess. His intellect is very sharp. His argumentative skill is really amazing. He has wonderful clarity on the *Nyaya* concepts. His way of presentation, is excellent. He has an insatiable thirst for searching the truth which is quenched only by reaching the logical end. To crown all these, he has an unquestionable sincerity and integrity to the philosophical stand by which he stands and his dedication to the philosophical pursuit, is complete. I pray to the Lord Srinivasa, that Prof. Bhat will continue to engage himself in writings of this kind even more seriously and contribute his mite for the sustenance of shastric tradition in general and the Nyaya tradition in particular.

Prof. D. Prahlada Char
Vice-Chancellor
Rashtriya Sanskrit Vidyapeetha, Tirupati

## द्वितीयमुद्रणमधिकृत्य

विद्वदग्रेसरैः वाक्यार्थकुशलैः पाठप्रवचनादिकर्मणि व्यापृतैः श्रीमद्भिः हरिदास-भट्टाचार्यैः समर्पितां सोपज्ञटिप्पणीयुतां पञ्चलक्षणीं पुनर्मुद्राप्य विदुषां करकमलयोः समर्पयितुं मोमुद्यते नश्चेतः। पञ्चलक्षणीयं पूर्वं मुद्रापिता समेषां विदुषां विद्यार्थिनां च महते उपाकराय कल्पितेति नैकैर्विद्वद्भिः श्लाघिता। अचिरादेव सहस्राधिक-ग्रन्थाः विक्रीताः। न्यायशास्त्रविदां विदुषां विद्यार्थिनां च नूत्नबोधनशैलीम् अवलम्ब्य प्रवृत्तेयं पञ्चलक्षणी ज्ञानाभिवृद्धिं वितनुत इति विश्वसिमः।

संशोधनमन्दिरस्यास्य संस्थापकाः पदवाक्यप्रमाणपारावारपारीणाः समेषाम् अस्माकं गुरवः श्रीमद्विश्वेशतीर्थश्रीमच्चरणाः न कदापि विस्मरणमर्हन्ति। तेषाम् अनुग्रहविशेषेण संशोधनमन्दिरमिदं विद्वद्गोष्ठीसमायोजन-ग्रन्थप्रकाशनादि-कर्मणि व्यापृतमस्ति । प्रणतिततीभिरेव केवलाभिः कार्तज्ञ्यं गुरुचरणेभ्यः व्याहरामः।

ग्रन्थस्यास्य प्रकाशने सर्वविधार्थिकसाहाय्यं कृतवद्भ्यः राष्ट्रियसंस्कृतसंस्थान-कुलपतिपदमलङ्कुर्वाणेभ्यः शताधिकप्रबन्धप्रणयनेन विद्वत्समाजे प्रथितेभ्यः प्रा.राधावल्लभत्रिपाठिमहोदयेभ्यः सश्रद्धं प्रणतयः समर्प्यन्ते। तथैव विद्वत्प्रवराणां श्रीमतां आर्. देवनाथमहाभागानां साहाय्यमपि सप्रश्रयं स्मरामः। अस्याः संस्थाया अध्यक्षाः विद्वद्धौरेयाः श्रीमन्तः डि. प्रह्लादाचार्याः ग्रन्थप्रकाशनकर्मणि मार्गदर्शनं विधाय अन्वगृह्णन्, तेभ्यः प्रणतयः समर्प्यन्ते।

श्रीमन्तः हरिदासभट्टाचार्याः द्वितीयमुद्रणावसरे उपयुक्ताः टिप्पणीः तत्रतत्र संयोज्य विद्यार्थिनां महतीमुपकृतिं वितेनिरे। तेभ्यः प्रणतयः समर्प्यन्ते।

विदुषां चरणरजोरागी
**डा. ए.वि. नागसम्पिगे**
निदेशकः

## प्राक्कथनम्

पञ्चलक्षणीग्रन्थः व्याप्तिस्वरूपाधिगमे प्रथमं सोपानम् । अस्मिन् ग्रन्थे मणिकारेण व्याप्तेः स्वरूपं पञ्चधा निरुक्तम् । पञ्चापि स्वरूपाणि 'केवलान्वयिन्यभावात्' इति एकेनैव दोषेण निरस्तानि । तदुपरि केवलान्वयिस्थले व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्याभावस्य प्रसिद्धिमाशङ्क्य चतुर्दशलक्षणानि प्रवृत्तानि । तानि च 'प्रतियोग्यवृत्तिश्च धर्मः न प्रतियोगितावच्छेदकः' इति निरस्य मणिकारेण सिद्धान्तव्याप्तिः अवतारिता । इत्थं व्याप्तिस्वरूपमधिकृत्य मणिकारस्य निबन्धत्रयं प्रथितम् । तेष्वेतेषु पञ्चलक्षणी प्राथमिकी ।

मणिग्रन्थमधिकृत्य नैयायिकमूर्धन्यस्य रघुनाथशिरोमणेः व्याख्यानं दीधितिनाम्ना विश्रुतम् । तस्यास्य नैकेषु विवरणेषु जगदीशतर्कालङ्कारस्य गदाधरभट्टाचार्यस्य च व्याख्याद्वयम् अध्ययनपरम्परायां वरीवर्ति । ताविमौ वङ्गदेशवासिनौ समकालीनौ (१७ शताब्दिः) । तदुभयमपि ग्रन्थेऽस्मिन् प्रकाशितम् ।

तदिमां गादाधरीं जागदीशीं चाधिकृत्य व्याख्यैका हरिदासभट्टोपज्ञात्र प्रकाशिता । यद्यपि चिरनूतना विशदा च व्याख्यैका 'बालबोधिनी'नाम्ना पण्डितमूर्धन्येन डा. एन्.एस्. रामानुजताताचार्येण विनिर्मिता उपलभ्यते । अथापि काञ्चन अर्वाचीनां सरणिमनुसृत्य इयं ग्रथितेति विशेषः । विद्यार्थिनां विषयावधारणसौकर्याय कानिचन चिह्नानि (Symbols) अवलम्ब्य सचित्रं विवरणं टिप्पण्यामस्यां निबद्धम् । तद्यथा-

'घटनिष्ठप्रतियोगितावच्छेदकं घटत्वम्' इत्ययं विषयः इत्थं प्रदर्शितः -

घट



प्रतियोगिता

(—)

घटत्वम् ।

२. व्याख्यायामस्यां कचन अभ्यधिका आशङ्का परिहृता। यथा- द्वितीयलक्षणे कालिकसम्बन्धावच्छिन्नप्रतियोगिताक-आकाशाभावसाध्यकानुमाने स्वरूप-सम्बन्धः लक्षणघटकः न भवतीत्युक्तम् गदाधरेण। तस्यापि लक्षणघटकत्वं सम्भवतीति अभ्यधिकां शङ्कां कृत्वा परिहारः प्रदर्शितः। सेयमाशङ्कावश्यम् अध्येतॄणां छात्राणां मनसि उन्मिषति या ममापि छात्रावस्थायां परिहाररहिता आसीत्।

३. अ. कचन अर्वाचीनानि व्याख्यानानि अतिरिच्य यथामति गुरुमुखा-दधिगतं विवरणान्तरं दत्तम्। तद्यथा- द्वितीयलक्षणे अन्ते 'न चैवं संयोगाभावत्व-कल्पनायां धर्मिणामपि आनन्त्यात्...' इत्यादि गादाधरीवाक्यस्य विवरणम्।

आ. 'नहि भवति नीलो घटो घटान्यः' इति दीधितिवाक्ये 'घटान्यः' इति समस्तपदमेवोचितम्। न तु 'घटादन्यः' इति व्यस्तम्। व्यस्तपाठस्यापि उपलम्भे तत्र लुप्तविभक्तिस्मरणेन कथञ्चित् भेदान्वयबोधः स्वीकार्य इत्याह जगदीशः।

अत्र कथञ्चित् इति पदेन सूचितम् अस्वारस्यं चन्द्रिकाव्याख्यायाम् इत्थं प्रकटीकृतम्- 'समासस्थलेऽपि लुप्तविभक्तिस्मरणस्यावश्यकत्वे ''ऋद्धस्य राजमातङ्गाः'' इति प्रयोगोऽपि प्रामाणिकः स्यात्' इति। परन्तु अयं पक्षः व्युत्पात्तिवादे गदाधरेण कटाक्षीकृतः। तस्मात् लुप्तविभक्तिस्मरणे गौरवमेव दोषः। अयमंशः अत्र व्याख्यायां प्रकटीकृतः।

४. अ. विशेषतः गादाधरी-जागदीश्योः तुलनात्मकम् अध्ययनं विहितम्। यं पक्षं गदाधरः अवलम्बते तं पक्षं जगदीशः क्वचित् निराकरोतीव भासते। यथा 'साकल्यं साध्याभाववति साध्ये च बोध्यम्' इति वाक्यस्य प्राचीनैः कृता व्याख्या जगदीशेन निराकृता। गदाधरः प्राचीनाननुसरति। तयोः कतरः ज्यायान् इति विमर्शः कृतः।

आ. निर्धूमत्वव्याप्यसाध्यके अव्याप्तिं प्रदश्र्य दीधितिकारेण चतुर्थलक्षणं

दूषितम्। गदाधरः हेतुभेदमादाय तत्र अव्याप्तेः अभावं प्रदर्शयति। ये पुनः अव्याप्तिम् उपपादयन्ति तन्मतं विस्तरेण निराचष्टे। जगदीशः पुनः नैवं कोलाहलं चकार। तद्व्याख्यानुसारेण हेतुभेदः नैव लक्षणघटकः। अत्र गदाधरेण मूलानुक्तं लक्षण-परिष्कारं स्वयं कृत्वा कुचोद्यं कृतमिव भासते। तस्याकूतं किम् इति च अस्यां व्याख्यायां विमर्शः कृतः।

इत्थम् इयं व्याख्या कैश्चिदपूर्वैरंशैः उपेता छात्राणाम् उपकाराय कल्पेत इति विश्वसिमि। नेदं चापल्यमात्रेण लिखितम्। न वा मन्दानामपि ग्रन्थः सुबोधः स्यादिति। अत एव नात्र विस्तरेण विवरणं कृतम्। अथापि सचित्रं विवरणं कृतमित्येवास्य अनितरसाधारणं वैशिष्ट्यम्। तदिदं प्रयोगविज्ञानम् आपरितोषाद्विदुषां न साधु मन्ये। सन्तः निर्मलहृदयेन परिशील्य बालबुद्धिमिमं जनमनुगृह्णीयुः।

अस्मद्गुरुचरणाः श्रीचरणाः स्वीयेनानुग्रहवचनेन नितरामन्वगृह्णन्निति स्मारं स्मारं तेभ्यो प्रणामततीः समर्पये।

सव्याख्यानस्यास्य मुद्रणं द्वितीयवारं संशोधनमन्दिरेण क्रियते। प्रायः विद्यापीठस्याध्यापकाः छात्राश्चास्य विशेषेणोपभोक्तारः। गादाधरीव्याख्यायां तथा जागदीशीव्याख्यायां च प्रथममुद्रणे समुपलब्धाः केचन दोषाश्चात्र परिहृताः।

अस्य पुनर्मुद्रणार्थं सोत्साहं प्रवृत्तवतां संशोधनमन्दिरनिदेशकानां डा. ए. वि. नागसम्पिगेमहोदयानामहमत्यन्तं कृतज्ञः।

तत्रभवतो भगवतः श्रीकृष्णस्य अस्मद्गुरुचरणानां श्रीश्रीविश्वेशतीर्थ-श्रीपादानां च अनुग्रहेणैवेदं कार्यं मया समनुष्ठितमिति सदृढं विश्वसिमि। कार्येऽस्मिन् विनोद्वेगं मुद्रणसाहाय्यं समनुष्ठितवते श्रीव्यासराज जोषिमहोदयाय च कृतज्ञोऽहम्।

अ. हरिदासभट्टः

# व्याख्याने विनियुक्तानां सङ्केतानां सूची

| | | | |
|---|---|---|---|
| १. | प्रतियोगि | - | ×→ |
| २. | अवच्छेदकम् | - | (—) |
| ३. | आधाराधेयभावः (निष्ठः, तद्वान्) | - | ↧ |
| ४. | जन्यजनकभावः, सम्बन्धि | - | → |
| ५. | समनियतः | - | (← →) |
| ६. | विरोधः | - | (←×→) |
| ७. | घटकम् | - | (ooooooo) ↓ |
| ८. | अन्यतरः | - | (वा) |
| ९. | विशिष्टः | - | (+) |
| १०. | अभेदः | - | = |
| ११. | नास्ति | - | × |

॥ श्रीः ॥

# ॥ अनुमानगादाधर्याम् व्याप्तिपञ्चकप्रकरणम् ॥

## ॥ अथ तर्कवाचस्पतिश्रीगङ्गेशोपाध्यायविरचित-तत्त्वचिन्तामणिः ॥

व्याप्तिग्रहोपायश्च वक्ष्यते। नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः?

न तावदव्यभिचरितत्वम्, तद्धि न

साध्याभाववदवृत्तित्वम्,

साध्यवद्भिन्न-साध्याभाववदवृत्तित्वम्,

साध्यवत् प्रतियोगिकान्योन्याभावासामानाधिकरण्यम्,

सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्,

साध्यवदन्यावृत्तित्वं वा

केवलान्वयिन्यभावात् ॥

## ।। अथ श्रीरघुनाथशिरोमणिविरचितदीधितिः ।।

सर्वमिदं सति व्याप्तिनिश्चये स्यात्, स एव न सम्भवति, उपायाभावा-दित्यत आह- **व्याप्तीति** ।।

## ।। अथ श्रीगदाधरभट्टाचार्यविरचिता व्याख्या ।।

**सर्वमिदम्** अनुमानप्रामाण्यव्यवस्थापकयुक्तिप्रदर्शनम्, व्याप्तिनिश्चये सतीत्यन्वयः। **स एव**- व्याप्तिनिश्चय एव। **न सम्भवति**- न उत्पत्तुर्महति। **उपायाभावात्**- निश्चायकाभावात्।

---

## ।। श्रीविश्वेशतीर्थश्रीपादानां शिष्यवरेण हरिदासभट्टेन विरचितम् गादाधरीटीकाव्याख्यानम् ।।

**सुजनकलिमलघ्नं जातकार्ष्ण्यं ततो यं कृषिकृतवसतीनां सौख्यदत्वाच्च कृष्णम्।**
**निगदति मुनिवृन्दः नन्दसूनुं सुनन्दं तमहमखिलसेव्यं नौमि मध्वेशकृष्णम् ।।**
**विश्वेशाख्यगुरोः पादयुगलं सम्प्रणम्य च।**
**करोमि पञ्चलक्षण्याः व्याख्यां सुज्ञानसिद्धये ।।**

**अनुमानप्रामाण्यव्यवस्थापक-युक्तिप्रदर्शनमिति ।।** 'अनुमानं प्रमाणं प्रमिति-जनकतावच्छेदक-धर्मवत्वात्' - इति अनुमानप्रामाण्यव्यवस्थापकयुक्तिः। अनुमानं नाम अनुमितिकारणम्। तादृशं च परामर्शः। 'साध्यव्याप्यहेतुमान् पक्षः' इति तस्याकारः। तत्र व्याप्तिः विषया। अत एव तस्मिन् परामर्शे व्याप्तिनिश्चयत्वं अस्ति। तस्मात् व्याप्तिनिश्चयत्वमेव अनुमितिरूपप्रमितिजनकतावच्छेदको धर्मः। स च धर्मः अनुमान-पदवाच्ये परामर्शे अस्ति। तस्मात् अनुमानं प्रमाणम् इति प्रामाण्यसाधकानुमानार्थः।

अनुमानम्= व्याप्तिनिश्चयः ⟶ अनुमितिः (प्रमितिः)
↓ (निष्ठा)
प्रमितिजनकता
(—) (अवच्छेदकम्)
व्याप्तिनिश्चयत्वम्

## ॥ दीधितिः ॥

समारब्धानुमानप्रामाण्यपरीक्षा-कारणीभूत-व्याप्तिग्रहोपाय-प्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणमारभते- **नन्वित्यादिना** ॥

## ॥ गादाधरी ॥

अनुमानप्रामाण्योपपादकतया व्याप्तिग्रहोपायस्यैव इदानीमभिधातुम् उचितत्वात् 'वक्ष्यते' इत्यनेन तत्प्रतीक्षां विधाय व्याप्ति-स्वरूपनिरूपणम् अयुक्तमित्याशङ्कां परिजिहीर्षुः तत्प्राथम्ये तस्य व्याप्ति-ग्रहोपायप्रतिपादनौपयिकत्वरूपबीजं दर्शयन् 'ननु' इत्यादिग्रन्थमवतारयति- **समारब्धेति** ॥

---

**प्रतीक्षा** ॥ भविष्यत्कालकर्तव्यत्वप्रकारकज्ञानम्। **विधाय** ॥ उत्पाद्य।

मणिकारः प्रकृते अवश्यकर्तव्यं व्याप्तिग्रहोपायप्रतिपादनम् 'व्याप्तिग्रहोपायश्च वक्ष्यते' इत्यनेन ग्रन्थेन 'भविष्यत्काले करिष्यामि' इति ज्ञापयति। तदनुचितमिति भावः।

'व्याप्तिग्रहोपायप्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणम्' इति दीधितिः -

व्याप्तिस्वरूपनिरूपणम्।

↓ (कार्यं)

व्याप्तिग्रहोपायप्रतिपादनम् =

'अव्यभिचारग्रहः सहचारग्रहश्च व्याप्तिज्ञानजनकौ'

इत्युक्तिः।

↓

अनुमानप्रामाण्यपरीक्षा =

अनुमानप्रामाण्यविषये परमतनिरासपूर्वकस्वमतस्थापनम्॥

## ॥ गादाधरी ॥

व्याप्तिग्रहोपायाकथनेन प्रामाण्यव्यवस्थापनस्यानिष्पन्नत्वात् 'समारब्ध' इति परीक्षाविशेषणम् । परीक्षा च परमतनिराकरणपूर्वकस्वमतव्यवस्थापनम् । 'कारणीभूत' इति प्रतिपादनविशेषणम्।

यद्यपि व्याप्तिग्रहोपायप्रतिपादनस्य अनुमानप्रामाण्यव्यवस्थापकत्वकथनं न तस्यावश्यकत्वप्रदर्शनाय। 'व्याप्तिग्रहोपायश्च वक्ष्यते' इत्येतद् ग्रन्थावतारणाद् व्याप्तिग्रहोपायस्य अनुमानप्रामाण्योपपादकतालाभेनैव तल्लाभात्, तथापि प्रामाण्यव्यवस्थापननिर्वाहकतया भवतु व्याप्तिग्रहोपायस्येदानीमाकाङ्क्षित-त्वम्, एवमपि तन्न व्याप्तिस्वरूपनिरूपणं विना सम्भवतीति प्रथमतः तदेवोचितम् इत्येतत्सूचनाय एतदभिहितम्।

---

**ग्रन्थावतरणात्** ॥ 'व्याप्तिग्रहोपायश्च वक्ष्यते' इति मणिग्रन्थस्य अवतारिका-रूपात् 'सर्वमिदं सति व्याप्तिनिश्चये स्यात्' इत्यादि दीधितिग्रन्थात् 'व्याप्तिग्रहोपाय-प्रतिपादनं अनुमानप्रामाण्यव्यवस्थापने आवश्यकम्' इति ज्ञायते। ततः, पुनः 'ननु' इत्यादि मणिग्रन्थावतरणसमये दीधितिकृता 'समारब्ध' इत्यादिना अनुमानप्रामाण्य-परीक्षां प्रति व्याप्तिग्रहोपायप्रतिपादनं कारणं इत्युच्यते । तदिदं लिखनसंक्षेपवतः दीधितिकृतः न शोभते इति गदाधरस्य आक्षेपः ।

तस्यायं परिहारः गदाधरेण अभिप्रेतः- व्याप्तिस्वरूपनिरूपणं व्याप्तिग्रहोपाय-प्रतिपादनद्वारा अनुमानप्रामाण्यव्यवस्थापनाङ्गम् । अतः व्याप्तिस्वरूपनिरूपणम् अवश्यं कर्तव्यं इत्यत्रैव दीधितिकृतः तात्पर्यम्। तदर्थं पूर्वोक्तं प्रामाण्यव्यवस्थापन-कारणत्वं व्याप्तिग्रहोपायप्रतिपादनस्य अनूद्य तत्कारणत्वं व्याप्तिस्वरूपनिरूपणस्य प्रकृतग्रन्थे उक्तवान् । अतः नात्र व्याप्तिग्रहोपायप्रतिपादनस्य अनुमानप्रामाण्य-व्यवस्थापनकारणत्वोक्तौ मुख्यं तात्पर्यम्।

## ॥ गादाधरी ॥

**निदानमिति ॥** व्याप्तिघटकीभूताव्यभिचारांशभाने बाधाभावमुद्रया व्यभिचारज्ञानाभावो हेतुः । साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकांशग्रहे च विशेषणज्ञानमुद्रया सहचारग्रहो हेतुरिति क्रमेण व्याप्तिग्रहोपायप्रतिपादनस्य व्याप्तिस्वरूपम् अप्रतिपाद्य अशक्यत्वादिति भावः ।

---

तथा च इदं निष्पन्नम्-

व्याप्तिस्वरूपनिरूपणम् ।



व्याप्तिस्वरूपज्ञानम् ।



व्याप्तिग्रहोपायप्रतिपादनम् ।



अनुमानप्रामाण्यव्यवस्थापनम् ।

**व्याप्तिघटकीभूतेत्यादि ॥** व्याप्तिस्वरूपनिरूपणस्य व्याप्तिग्रहोपायप्रतिपादनाङ्गत्वं च -

व्याप्तिस्वरूपम् – हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगि-साध्य —— सामानाधिकरण्यविशिष्टहेतु-



आश्रयतासम्बन्धः

-विशिष्टहेतुतावच्छेदकम् ।

१.  २. 

व्याप्तिग्रहोपायः

| अव्यभिचारग्रहः । ('साध्यं अत्यन्ताभावप्रतियोगि' इति ज्ञानस्याभावः । अयं च बाधाभावरूपः ।) | सहचारग्रहः ('साध्यसमानाधिकरणो हेतुः' इति ज्ञानम् । इदं च विशेषणतावच्छेदकप्रकारकनिर्णयरूपम् ।) |
|---|---|

## ॥ गादाधरी ॥

प्रथमतः पूर्वपक्षस्यैवाभिधानेन निरूपयतीत्यसङ्गतम् अत 'आरभत' इत्युक्तम्। निरूपणस्य परमतनिराकरणपूर्वक-स्वसिद्धान्तकथनरूपतया पूर्वपक्षाभिधान-तत्खण्डनयोरपि तदारम्भरूपता इति ध्येयम्।

**मूले न तावदव्यभिचरितत्वमिति ॥** 'व्याप्तिरिति' प्रश्नस्थं पदम् अनुषज्यते । तथा च 'अव्यभिचारपदार्थो नानुमितिजनकज्ञानविषयः' इत्यर्थः । अनुमितिजनकत्वं नाव्यभिचारपदार्थावच्छिन्न-हेतुविषयताघटितधर्मावच्छिन्नम् इति तु पर्यवसितम्। अत्र हेतुमाह- **तद्धि न साध्याभाववदवृत्तित्वमित्यादि** । **हि** यतः, साध्याभाववदवृत्तित्वादिरूपं **तद्** अव्यभिचरितत्वं न व्याप्तिरित्यनुषङ्गेणान्वयः । तथा च साध्याभाववदवृत्तित्वादिरूपा येऽव्यभिचारपदार्थाः

---

**पर्यवसितमिति ॥** अनुमितिकारणीभूतपरामर्शे सिद्धान्तव्याप्तिरेव विषया, न तु अव्यभिचारपदार्थरूपपूर्वपक्षव्याप्तिः । अतः परामर्शनिष्ठायां अनुमितिजनकतायां अव्यभिचारपदार्थावच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नत्वं नास्तीति भावः ।

साध्यव्याप्यहेतुमान् पक्षः (परामर्शः) ⟶ अनुमितिः ।
↓ (निष्ठ)
अनुमितिजनकता
(—) (अवच्छेदकम्)
सिद्धान्तव्याप्त्यवच्छिन्ना या हेतुविषयता
तन्निरूपिता या पक्षविषयता निरूपकज्ञानत्वम्।
(००० (०) ०००) घटकम्
↓
सिद्धान्तव्याप्त्यवच्छिन्नहेतुविषयता
(न तु अव्यभिचारपदार्थावच्छिन्न(पूर्वपक्षव्याप्तिः)हेतुविषयता।)

## ।। गादाधरी ।।

**तत्तदवच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नत्वाभावकूटवत्त्वादिति निरुक्त-पर्यवसितसामान्याभावसाधकः फलितो हेतुः ।**

**न चाप्रयोजकत्वम् । विशेषाभावकूटस्य सामान्याभावव्याप्यतायां अवि-वादात् ।**

---

**अविवादात् इति ।।** यत्र यदीययावद्विशेषाभावकूटः तत्र तत्सामान्याभाव इति व्याप्तिः ।

| **विशेषाभावाः ।** *(अग्रे वक्ष्यमाण-पञ्चव्याप्तिस्वरूप-घटितधर्मावच्छिन्नत्वाभावाः ।)* | **सामान्याभावः ।** |
| --- | --- |
| १. साध्याभाववदवृत्तित्वावच्छिन्न-हेतुविषयताघटितधर्मावच्छिन्नत्वाभावः । | |
| २. साध्यवद्भिन्नसाध्याभाववदवृत्तित्वा-वच्छिन्नहेतुविषयताघटित-धर्मावच्छिन्नत्वाभावः । | |
| ३. साध्यवत्प्रतियोगिकान्योन्याभावा-सामानाधिकरण्यावच्छिन्नहेतु-विषयताघटितधर्मावच्छिन्नत्वाभावः । | अव्यभिचारपदार्थावच्छिन्न हेतुविषयताघटित-धर्मावच्छिन्नत्वाभावः । |
| ४. सकलसाध्याभाववन्निष्ठाभाव-प्रतियोगित्वावच्छिन्नहेतुविषयताघटित-धर्मावच्छिन्नत्वाभावः । | |
| ५. साध्यवदन्यावृत्तित्वावच्छिन्नहेतु-विषयताघटितधर्मावच्छिन्नत्वाभावः । | |

उपरि निर्दिष्टाः ये पञ्चाव्यभिचारपदार्थघटितधर्मावच्छिन्नत्वाभावाः ते सर्वे केवलान्वयिसाध्यकानुमितिकरण-परामर्शनिष्ठजनकतायां सन्ति । अतः तादृश-जनकतायां उक्तसामान्याभावोऽप्यस्ति इति भावः ।

## ॥ गादाधरी ॥

**तत्र साध्याभाववदवृत्तित्वादिरूपा ये पञ्च अव्यभिचारपदार्थाः तदवच्छिन्न-विषयताघटितधर्मावच्छिन्नत्वाभावस्य प्रत्येकसाधकं हेतुं वक्ष्यति- केवलान्वयि-न्यभावादिति ॥**

---

तथा चानुमानप्रकारः -

केवलान्वयिसाध्यकपरामर्शः ।
(सिद्धान्तव्याप्तिविशिष्टहेतुमान् पक्षः
इति ज्ञानम्)



अनुमितिजनकता (पक्षः)




| हेतुः | साध्यं |
|---|---|
| १.साध्याभाव...धर्मावच्छिन्नत्वाभावः । | अव्यभिचारपदार्थावच्छिन्नहेतु-विषयताघटितधर्मावच्छिन्न-त्वाभावः । |
| २.साध्यवद्भिन्न... ” ” । | |
| ३.साध्यवत्प्रतियोगिक ... ” ” । | |
| ४.सकलसाध्या ... ” ” । | |
| ५.साध्यवदन्या ... ” ” । | |

केवलान्वयिसाध्यकानुमितिजनकतायां कुतः विशेषाभावकूटाः सन्ति ? इति असिद्धिशङ्कायां 'तादृशजनकतायाः साध्याभाववदवृत्तित्वावच्छिन्न-हेतुविषयता-घटितधर्मशून्यवृत्तित्वात्' इति हेतुः गदाधरेण उपन्यस्तः । केवलान्वयिसाध्यकपरामर्शे अनुमितिजनकता अस्ति । परं तत्र साध्याभाववद् अवृत्तित्वाद्यवच्छिन्नहेतुविषयता-घटितधर्माः न सन्ति । इत्थं च ते पञ्चधर्माः न्यूनवृत्तित्वात् जनकतायां न अवच्छेदकाः —

## ।। गादाधरी ।।

साध्ये अत्यन्ताभावाप्रतियोगित्वान्योन्याभावप्रतियोगितानवच्छेदकत्व-

---




अस्योदाहरणं - गुणं प्रति द्रव्यं समवायिकारणम्। द्रव्यनिष्ठतादृशकारणतायां द्रव्यत्वं अवच्छेदकं, न तु द्रव्यत्वव्याप्यधर्माः। यतः द्रव्यत्वव्याप्याः पृथिवीत्वादयः नवद्रव्यवृत्तयो धर्माः प्रत्येकं गुणसमवायिकारणता-न्यूनवृत्तयः। अतः तादृश-कारणतायां पृथिवीत्वादिप्रत्येकधर्मावच्छिन्नत्वाभावकूटः अस्ति। तस्मात् द्रव्यत्व-व्याप्यधर्मावच्छिन्नत्वरूवसामान्याभावोऽपि अस्ति।




विशेषाभावाः

सामान्याभावः

१. पृथिवीत्वावच्छिन्नत्वाभावः।
२. जलत्वावच्छिन्नत्वाभावः।
३. तेजस्त्वावच्छिन्नत्वाभावः।
४. वायुत्वावच्छिन्नत्वाभावः।
५. आकाशत्वावच्छिन्नत्वाभावः।
६. कालत्वावच्छिन्नत्वाभावः।
७. ......

द्रव्यत्वव्याप्यधर्माव-च्छिन्नत्वाभावः।

रूपकेवलान्वयित्वग्रहदशायाम् अत्यन्तान्योन्याभावयोः साध्य-तदवच्छिन्न-प्रतियोगिकत्वभानासम्भवेन प्रतियोगितया साध्य-तदाश्रयविशेषितात्यन्ता-न्योन्याभाववदवृत्तित्वावच्छिन्नविषयितायाः तादृशविशेषदर्श्यनुमितिजनक-ज्ञाने अभावादित्यर्थः।

एवञ्च तादृशविषयिता-शून्यवृत्तित्वमेव अनुमितिजनकतायां दर्शितसाध्य-साधको हेतुरभिमत इति नासिद्ध्यादिः। ईदृशदिशा अग्रिमाग्रिमहेतवोऽपि परिष्करणीयाः।

---

**केवलान्वयित्वेत्यादि ॥**

| केवलान्वयित्वज्ञानम्। | पूर्वपक्षव्याप्त्यर्थं अपेक्षितं ज्ञानम्। |
|---|---|
| १.साध्यं अत्यन्ताभावाप्रतियोगि ('साध्यं नास्ति' इति वक्तुं न शक्यते) | १. अ.साध्यनिष्ठप्रतियोगिताकः अभावः। आ. प्रतियोगितासम्बन्धेन साध्यविशिष्टः अभावः। |
| २.साध्यं अन्योन्याभावप्रतियोगिता-नवच्छेदकम्। ('अयं साध्यवान्न' इति वक्तुं न शक्यते।) | २. अ. साध्यावच्छिन्नप्रतियोगिताकः भेदः। आ.साध्यावच्छिन्नप्रतियोगिताकत्व - सम्बन्धेन साध्यवद्विशिष्टः भेदः। |

**विशेषदर्शीति ॥** 'साध्यं अत्यन्ताभावाप्रतियोगि, अन्योन्याभावप्रतियोगितायां अनवच्छेदकम्' इति ज्ञानं वाधज्ञानरूपत्वात् विशेषदर्शनम्। तदेव च प्रकृते केवला-न्वयित्वज्ञानम्। तद्वतां उक्तात्यन्ताभावान्योन्याभावघटितव्याप्तिः अनुमितिजनक-परामर्शे विषयः नैव भवितुं अर्हति। अतः तादृशव्याप्त्यवच्छिन्नहेतुविषयिता विशेष-दर्शिनां परामर्शे नास्ति इत्यर्थः।

**ईदृशदिशेति ॥** नापीत्यादिना वक्ष्यमाणसिंहव्याघ्रलक्षणस्य दुष्टत्वे यः 'केवलान्वयिन्यभावात्' इति हेतुः उच्यते सोऽपि एवमेव परिष्करणीयः इत्यर्थः।

**॥ इति पञ्चलक्षण्याः अवतरणिकाग्रन्थः ॥**

***प्रथमलक्षणस्य दोषः -***

**॥ दीधितिः ॥**

अव्याप्यवृत्तिसाध्यकसद्धेतौ अव्याप्तिमाशङ्क्याह - **साध्यवद्भिन्नेति ॥**

***द्वितीयलक्षणम्***

साध्यवद्भिन्ने यः साध्याभावः तद्वदवृत्तित्वमर्थः ।

**॥ गादाधरी ॥**

दीधितौ **अव्याप्येति ॥** कपिसंयोगी एतत्त्वादित्यादावित्यर्थः । **अव्याप्तिमिति ॥** तत्र हेत्वधिकरणे एतद्वृक्षादौ अन्यदेशकालावच्छेदेन कपिसंयोगाद्यभावसत्त्वादिति भावः ।

साध्यवद्भिन्नो यः साध्याभाववानिति कर्मधारयेऽभेदसम्बन्धेन साध्यवद्भिन्नीयं यत् साध्याभावाधिकरणं तदवृत्तित्वमित्यर्थः स्यात् । तथासति तद्घटकीभूतस्य 'अभेदसम्बन्धेन साध्यवद्भिन्नीयं यत् तदवृत्तित्वस्य' एव लक्षणत्वसम्भवात् साध्याभाववत्त्वांशस्य वैयर्थ्यम् । अतः सप्तमीतत्पुरुषं व्याचष्टे- **साध्यवद्भिन्न इति ॥**

---

**अन्यदेश-कालावच्छेदेनेति ॥** अन्यदेशः= प्रतियोग्यनधिकरणदेशः, वृक्षमूलादिः। अन्यकालः= प्रतियोग्यनवच्छेदककालः, द्रव्यस्य उत्पत्तिकालः । तस्मिन् काले कस्यापि गुणस्य अभावात् संयोगाभावः द्रव्येऽपि सम्भवति ।

**साध्यवद्भिन्नेति** द्वितीयलक्षणवाक्ये समासद्वयं कर्तुं शक्यते ।

१. कर्मधारयः - साध्यवद्भिन्नश्चासौ साध्याभाववांश्च =
साध्यवद्भिन्नसाध्याभाववान् ।

२ तत्पुरुषः - साध्यवद्भिन्ने साध्याभावः= साध्यवद्भिन्नसाध्याभावः ।

## ॥ गादाधरी ॥

तथा च साध्यवद्भिन्नवृत्तिर्यः साध्याभावः तद्वदवृत्तित्वमर्थः। तत्र पूर्ववदभेदेन

---

कर्मधारयसमासे पूर्वपदार्थस्य उत्तरपदार्थे अभेदसम्बन्धेन अन्वयः।

पदम्- साध्यवद्भिन्न —— साध्याभाववान्
अर्थः - साध्यवत्प्रतियोगिकभेदवान् — साध्याभावाधिकरणम्

सम्वन्धः - अभेदः

अस्मिन् समासे सति यत् लक्षणं सम्पद्यते तस्मिन् लक्षणे लघुभूतं लक्षणान्तरं घटकं भवति।

**घटितलक्षणम्** - साध्यवद्भिन्नं यत् साध्याभावाधिकरणं तदवृत्तित्वम्।
**घटकलक्षणम्** - साध्यवद्भिन्नं यत् - अधिकरणं तदवृत्तित्वम्।

घटकस्य लक्षणत्वेऽपि 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यत्र प्रथमलक्षणे प्रसक्तः दोषः निवारयितुं शक्यते। तथा हि - तत्र साध्यं कपिसंयोगः। साध्यवान् वृक्षादिः। साध्यवद्भिन्नः गुणः। न तु वृक्षः। भेदस्य व्याप्यवृत्तित्वात्। तत्र न वर्तते हेतुः इति। एवं च 'घटकस्यैव लक्षणत्वे सम्भवति घटितस्य न लक्षणत्वम्' इति साध्याभावपदघटितस्य लक्षणत्वं न स्यात्। तस्मात् कर्मधारयः नैव आश्रयणीयः। तत्पुरुषसमासः आश्रयणीयः। तत्र च अयं बोधः भवति -

पदम् - साध्यवद्भिन्न सप्तमीविभक्तिः साध्याभाव
अर्थः - साध्यवत्प्रतियोगिकभेदवान् आधेयता साध्याभावः

सम्वन्धः - निरूपितत्वं आश्रयत्वं

वृत्तिः

### ॥ गादाधरी ॥

साध्यवद्भिन्नपदार्थविशेषितधर्मि-अवृत्तित्वादेर्न घटकता (तादृशपदार्थस्य धर्मिण्यविशेषणत्वाद्)। वृत्त्यादिविशेषणतयैव साध्यवद्भिन्नस्य निवेशाद् इति न साध्याभावांशवैयर्थ्यमिति भावः।

---

तथा च लक्षणार्थः - साध्यवद्भिन्नवृत्तिः यः साध्याभावः, तद्वद्- अवृत्तित्वम्। अत्र च साध्यवद्भिन्नपदार्थस्य पूर्ववत् न मतुबर्थे अधिकरणे अन्वयः। किन्तु, सप्तम्यर्थे आधेयत्वे (वृत्तौ) अन्वयः। अतः पूर्वोक्तं लघुलक्षणं नात्र घटकम्। तत् लक्षणान्तर-मेव। न च लक्षणस्य लक्षणान्तरेण वैयर्थ्यं वक्तुं शक्यते। अतः नास्य गुरोरपि लक्षणस्य अलक्षणत्वम्। समन्वयश्च इत्थम्- साध्यं कपिसंयोगः। साध्यवान् वृक्षः। साध्यवदन्यः गुणः। तद्वृत्तिः यः साध्याभावः कपिसंयोगाभावः। तद्वान् वृक्षः न भवति। अधिकरणभेदेन अभावभेदाभ्युपगमात्। अतः तद्वान् गुण एव। तत्र च हेतुः न वर्तते इति।

**साध्यवद्भिन्नपदार्थविशेषित-धर्म्यवृत्तित्वादेः इति ॥** कर्मधारये सति साध्य-वद्भिन्नेत्यादि लक्षणवाक्यस्थं यत् साध्यवद्भिन्नेति पदं, तस्य च योऽर्थः- साध्य-वत्प्रतियोगिकभेदवान्, तेन अभेदसम्बन्धेन विशेषितो भवति 'साध्याभाववान्' इत्यत्र मतुबर्थः सम्बन्धी (धर्मी, अधिकरणं वा)।

अत्र आदिपदेन वृत्तित्वस्य ग्रहणम्। तथा च साध्यवद्भिन्नपदार्थस्य साक्षात् अवृत्तित्वघटक वृत्तित्वे एव वा अन्वयः। तथा च साध्यवद्भिन्ननिरूपित-वृत्तित्वाभावः इति लघुलक्षणम्।

**वृत्त्यादिविशेषणतया इति ॥** वृत्तिः = आधेयता। सप्तमीतत्पुरुषे सति साध्यवद्भिन्ने इत्यत्र सप्तम्यर्थः आधेयत्वम्। तत्र निरूपितत्वसम्बन्धेन प्रकृत्यर्थस्य साध्यवद्भिन्नपदार्थस्य विशेषणत्वम्।

अत्र आदिपदेन साध्याभावः ग्राह्यः। 'साध्यवद्भिन्नसाध्याभावः' इति समस्त-पदे पूर्वपदस्य साध्यवद्भिन्नवृत्तितावान् इत्यर्थे लक्षणा। तत्पुरुषे पूर्वपदस्य तत्तद्विभक्त्यन्तार्थविशिष्टे लाक्षणिकत्वात्। तस्य च अभेदेन साध्याभावे अन्वयः। इत्थं च समासे साध्यवद्भिन्नपदार्थस्य साध्याभावे एव अन्वयः इति भावः।

## ॥ गादाधरी ॥

**अभावे साध्यीयत्वानिवेशे ह्रदादिवृत्तिगगनाद्यभाववति पर्वतादौ धूमादेर्वृत्तेः असम्भव इति तद्वारणाय साध्यपदम्।**

**न चाधिकरणभेदेनाभावभेदमते एवैतल्लक्षणकरणात् पर्वतादेर्न ह्रदादि-वृत्त्यभाववत्त्वमिति वाच्यम्, अव्याप्यवृत्तिप्रतियोगिकाभावस्य व्याप्यवृत्ति-त्वाव्याप्यवृत्तित्वादिरूपविरुद्धधर्माध्यासेन भेदस्य, लक्षणकर्तुः सम्मतत्वात्। आकाशाभावादेर्भेदकाभावेन तस्यैक्यात्। अत एवोक्तधर्माणां भेदकत्वम् 'एतानि च न भेदकानि' इत्यनेन दीधितिकृन्निराकरिष्यति।**

---

**अभावे साध्यीयत्वानिवेशेति ॥** साध्याभावः इति पदस्य साध्यविशिष्टः अभावः इत्यर्थः। साध्यवैशिष्ट्यं च अभावे स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेन। तत्र अभावे साध्यस्य अविशेषणत्वे 'साध्यवद्भिन्नवृत्तिः यो अभावः तद्वदवृत्तित्वम्' इत्यर्थः स्यात्। तदा ह्रदवृत्तिम् आकाशाभावम् आदाय 'वह्निमान् धूमात्' इत्यत्र अव्याप्तिः।

**विरुद्धधर्माध्यासेनेति ॥** द्रव्यवृत्तिः संयोगाभावः अव्याप्यवृत्तिः। गुणवृत्तिस्तु संयोगाभावः व्याप्यवृत्तिः। तयोः अभेदे एकस्मिन्नेव अभावे व्याप्यवृत्तित्वं अव्याप्य-वृत्तित्वं च स्यात्। न चैतयुक्तम्। विरुद्धत्वात्। अतः द्रव्यवृत्तिः संयोगाभावः अन्यः, गुणवृत्तिश्च अन्यः इति स्वीकार्यम्। गगनाभावस्तु नैवम्। सः ह्रदे पर्वते वा उभयत्रापि व्याप्यवृत्तिरेव। अतः तस्य अभेदे न किञ्चिद् बाधकम्।

**दीधितिकृन्निराकरिष्यतीति ॥** 'एतानि च न भेदकानि अविरोधात्' इति पूर्वपक्ष-प्रकरणे दीधितिवाक्यम्। तत्र च पूर्वप्रसक्तानां व्याप्यवृत्तित्व-अव्याप्यवृत्तित्व प्रभृतीनां धर्माणां अभावभेदकत्वं निरस्यते। तेन च तेषां धर्माणां भेदकत्वं प्रसक्तं इति ज्ञायते। अतः तादृशधर्मविशेषाणामेव अभावभेदकत्वम् न तु अधिकरणमात्रस्य। तस्मात् आकाशाभावः सर्वत्र एक एव इति स्यादेव अव्याप्तिरिति भावः।

## ॥ गादाधरी ॥

अथवा साध्याभावपदम् अनुयोगिताविशेषसम्बन्धेन साध्यीयपरम्। अभावीयविलक्षणानुयोगितालाभायैव अभावपदम्। न तु अभावत्वमपि निवेश्यम्। प्रयोजनाभावात्। इत्थं च तादृशविलक्षणसम्बन्धेन यः साध्यीयः तद्वदवृत्तित्वमित्येवार्थः। तथा च साध्यस्य यत्पदार्थाविशेषणत्वे ह्रदादिवृत्तिप्रमेयत्वादिमति पर्वतादौ हेतोर्वृत्तेः असम्भवः स्यादिति तन्निवेशः।

---

अधिकरणभेदेन अभावसामान्यभेदाभ्युपगमेऽपि साध्यपदस्य सार्थक्यमाह- **अथवेति ॥**

लक्षणवाक्यस्थ साध्याभावपदे घटकस्य साध्यपदस्य साध्यसम्बन्धी इत्यर्थः। सम्बन्धश्च न संयोगादिः। किन्तु स्वनिष्ठप्रतियोगिता-निरूपितानुयोगिता। तेन सम्बन्धेन साध्यसम्बन्धी च साध्याभावः एव।

साध्यम् (स्वम्) ॥ प्रतियोगि → प्रतियोगिता

अभावः ॥ अनुयोगी ← अनुयोगिता

निरूपितत्वम्

कुतस्तर्हि अभावपदम् इति चेत् - अनुयोगिता द्विविधा। अभावीया, सम्बन्धीया च। तत्र प्रकृते अभावीया अनुयोगितैव ग्राह्या इति सूचनाय अभावपदम्।

सम्बन्धीया अनुयोगिता

घटः — प्रतियोगि — संयोगः — अनुयोगि — भूतलम्

वह्नित्वम् — प्रतियोगि — समवायः — अनुयोगी — वह्निः

## ॥ गादाधरी ॥

**अत्र च साध्याभावः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः । अन्यथा वह्निमान् धूमादित्यादौ ह्रदादिनिष्ठमहानसीयवह्नित्वाद्यवच्छिन्न-प्रतियोगिताक-वह्न्याद्यभावस्य धूमवति सत्त्वेन, पृथिवीत्वाभाव-द्रव्यत्वाभावान्य-**

---

अभावीयानुयोगिताविशेषस्य सम्बन्धत्वानभ्युपगमे 'वह्निमान् धूमात्' इत्यत्र अव्याप्तिः । तत्र साध्यवद्भिन्ने ह्रदे वर्तते यः अनुयोगितासम्बन्धेन साध्यीयः वह्निसंयोगः। तद्वांश्च पर्वतः। तत्र धूमः वर्तत इति। अभावपदोपादानात् विलक्षणानुयोगिता लभ्यते । तच्च वैलक्षण्यं साध्यतावच्छेदकावच्छिन्न-साध्यतावच्छेदक-सम्बन्धावच्छिन्नप्रतियोगिता निरूपितत्वम् । तादृश-प्रतियोगितानिरूपित-अनुयोगितासम्बन्धेन च साध्यविशिष्टः न समवायः । किन्तु अभाव एव । अतो नाव्याप्तिः ।

**साध्यस्य यत्पदार्थाविशेषणत्व इति ॥** साध्यस्य=साध्यपदार्थस्य साध्यीयत्वस्य ।

१. साध्याभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वानिवेशे अव्याप्तिः -

अ. साध्यम् = वह्निः ।
साध्यवान् = पर्वतः ।
साध्यवदन्यः = ह्रदः ।
महानसीय वह्नेः अभावः ।

आ. अधिकरणभेदेन अभावसामान्यभेदमते -

साध्यम् = पृथिवीत्वाभाव- / द्रव्यत्वाभाव } अन्यतरः
साध्यवत् = जलम्
साध्यवद्भिन्ना = पृथिवी
साध्याभावः = द्रव्यत्वाभावस्य अभावः = द्रव्यत्वम् ।

## ॥ गादाधरी ॥

तरवान्, जलत्वात् इत्यादौ साध्यवद्भिन्नपृथिव्यादिनिष्ठस्य द्रव्यत्वाद्यात्मकस्य साध्यप्रतियोगिकाभावस्य जलादौ सत्त्वेन चाव्याप्त्यापत्तेः।

साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनापि प्रतियोगिता विशेषणीया। अन्यथा ह्रदादिवृत्तिसमवायादिसम्बन्धावच्छिन्नप्रतियोगिताक-वह्न्याद्यभावस्य धूमादि-

---

परिहारः - साध्याभावः न साध्यनिष्ठप्रतियोगिताकः ग्राह्यः। पूर्वोक्ताव्याप्तेः। किन्तु साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकः। तादृशश्च अभावः न प्रकृते द्रव्यत्वरूपः। जलेऽपि अन्यतरः नास्ति इति प्रत्ययापत्तेः। किन्तु अतिरिक्तः एव। स च न जलवृत्तिरिति नाव्याप्तिः।

अव्याप्तिः -

पृथिवीत्वाभाव } अन्यतरनिष्ठप्रतियोगिताकः अभावः
द्रव्यत्वाभाव

द्रव्यत्वं (वा) पृथिवीत्वं
↓
जलम्

परिहारः -

अन्यतरत्वावच्छिन्नप्रतियोगिताकः अभावः=
अतिरिक्तः कश्चन अभावः।
↓ ×
जलम्

२. साध्याभावे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे -

अ. साध्यं = वह्निः।
साध्यवान् = पर्वतः। ←
साध्यवद्भिन्नः = ह्रदः।
↓
समवायेन वह्न्यभावः।

## ॥ गादाधरी ॥

**मत्यपि वृत्तेरसम्भवस्य, कालिकसम्बन्धेन द्रव्यत्वाभावादौ साध्ये कालत्वादिहेतौ साध्यवद्भिन्नपरमाणुगगनादिवृत्ति-दैशिकविशेषणतासम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावात्मक-द्रव्यत्वादेः हेत्वधिकरणवृत्तित्वेन अव्याप्तेर्वा प्रसङ्गात्।**

---

आ. अधिकरणभेदेन अभावसामान्यभेदमते अव्याप्तिः -

साध्यं = द्रव्यत्वाभावः।

(कालिकेन)
साध्यवान् = कालः।
साध्यवद्भिन्नः = परमाणु-गगनादयः। (नित्येषु कालिकायोगात्)
साध्याभावः=द्रव्यत्वाभावस्य स्वरूपेण अभावः=द्रव्यत्वम्।

परिहारः - प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे नाव्याप्तिः।

साध्यं = द्रव्यत्वाभावः।

साध्यतावच्छेदकसम्बन्धः = कालिकः

तेन सम्बन्धेन साध्याभावः = द्रव्यत्वाभावस्य कालिकेन अभावः। नायं द्रव्यत्व-रूपः। सर्वस्यापि अभावस्य स्वरूपेण अभाव एव अभावप्रतियोगिरूपः। यथा-




इत्थं संयोगेन घटाभावस्य स्वरूपेण अभावः घटसमनियतः। तस्मात् घटरूपः।




इत्थं घटाभावस्य कालिकेन अभावः न घटसमनियतः। तस्मात् न घटरूपः।

## ॥ गादाधरी ॥

अत्र च साध्याभाववत्तायां सम्बन्धविशेषावच्छिन्नत्वानिवेशे वह्निमान् धूमादित्यादौ ह्रदादिवृत्तिवह्न्याद्यभावस्य कालिकसम्बन्धेन पर्वतादौ वृत्तेः अव्याप्तिः । दैशिकविशेषणताविशेषावच्छिन्नत्वनिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगिताक-आकाशाभावाभावादौ दैशिकविशेषणतया साध्ये आत्मत्वादिहेतौ साध्यवद्भिन्नकालादिवृत्तेः आकाशाभावात्मक-साध्याभावस्य आत्मादिषु वृत्तेः, घटत्वाभावादिसाध्यकसद्धेतौ साध्याभावस्य घटत्वादेर्दैशिकविशेषणतासम्बन्धेन वृत्तित्वे मानाभावेन चाव्याप्तिः ।

अतः साध्यतावच्छेदक-सम्बन्धेन साध्यवत्ताज्ञानं प्रति यादृशसम्बन्धेन

---

प्रकृते, साध्यतावच्छेदकसम्बन्धः कालिकः । तेन सम्बन्धेन द्रव्यत्वाभावस्य अभावः न द्रव्यत्वरूपः । किन्तु अतिरिक्तः । स च काले नास्तीति नाव्याप्तिः ।

**दैशिकविशेषणतेत्यादि॥** 'आत्मा, आकाशाभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववान्, आत्मत्वात्' इति अनुमानम् । आकाशाभावः केवलान्वयी । तथापि सः कालिकसम्बन्धेन नित्ये आत्मनि नास्ति । नित्येषु कालिकायोगात् ।

अत्र साध्यवद्भिन्नः अनित्यपदार्थः । तत्र कालिकसम्बन्धेन आकाशाभावस्यैव सत्वात् । तत्र विद्यमानः साध्याभावः= आकाशाभावः । स्वरूपसम्बन्धेन तद्वान् आत्मा । तत्र हेतुः वर्तते इति अव्याप्तिः ।

**अतः इति ॥** तथा च साध्यवत्ता ग्रहविरोधिता-नियामकसम्वन्धेन साध्याभाववत्वं ग्राह्यम् । स च सम्बन्धः तत्र तत्र विभिन्नः भवति-

१. संयोगेन वह्निमान्     (←X→) **स्वरूपेण** वह्न्यभाववान् ।
२. कालिकेन आकाशाभावः नास्ति  (←X→) **कालिकेन** आकाशाभावः अस्ति ।
३. समवायेन घटत्वं नास्ति     (←X→) **समवायेन** घटत्वं अस्ति ।

## ॥ गादाधरी ॥

स्वप्रकारकनिश्चयः प्रतिबन्धकः तेन सम्बन्धेनाभाववत्त्वं निवेश्यम्। संयोगेन वह्न्यादौ साध्ये तादृशसम्बन्धो दैशिकविशेषणता।

कालिकविशेषणतासम्बन्धेन आकाशाभावाभावे दैशिकविशेषणतया साध्ये कालिकसम्बन्ध एव तथा, समवायादिना घटत्वादेरभावे दैशिकविशेषणतया साध्ये समवायादिरेवेति न दोषः।

न चैवं वृक्षनिष्ठा या कपिसंयोगाभावीयमूलावच्छिन्नविशेषणता तादृश-सम्बन्धेन वृक्षादौ तादृशाभाववत्ताज्ञानेऽपि कपिसंयोगवत्ताज्ञानोत्पत्तेः तादृश-सम्बन्धो न लक्षणघटक इति साध्यवद्भिन्नवृत्तित्वविशेषणं व्यर्थमिति वाच्यम्।

संयोगतदभावयोरविरुद्धत्वज्ञानाभावदशायां 'वृक्षः कपिसंयोगाभाववान्' इति ज्ञानस्यापि वृक्षे कपिसंयोगवत्ताज्ञानविरोधितया वृक्षनिष्ठतदभावीयविशेषण-ताया अपि साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकीभूत-संसर्गताश्रयत्वात्।

---

**नचैवमिति ॥**

'वृक्षः समवायेन कपिसंयोगवान् (—×—) वृक्षः स्वरूपेण संयोगाभाववान्'

अनयोः ज्ञानयोः प्रतिवध्य-प्रतिबन्धकभावः नास्ति। कपिसंयोगस्य अव्याप्य-वृत्तित्वेन तद्वत्यपि मूलावच्छेदेन तदभावसत्वात्। अतः तत्र साध्यवत्ताग्रह-विरोधितानियामकः सम्बन्धः निरवच्छिन्नदैशिकविशेषणतैव। तेन च सम्बन्धेन वृक्षः साध्याभाववान् न भवितुमर्हति इति अव्याप्तेरेव अभावात् तद्वारणाय द्वितीय-लक्षणे दत्तं साध्यवद्भिन्नवृत्तित्वविशेषणं व्यर्थं इति आक्षेपः। 'संयोगः तदभावश्च अविरुद्धौ' इति यः न जानाति तस्य पुंसः स्वरूपेण संयोगाभाववत्ताज्ञानं संयोगवत्ता-बुद्धिं प्रति प्रतिबन्धकं भवति। अतः स्वरूपसम्बन्धोऽपि साध्यवत्ताग्रहविरोधिता-नियामकः भवतीति अस्त्येव अव्याप्तिः। तत्परिहाराय च साध्यवद्भिन्न-वृत्तित्वविशेषणं सार्थकम् इति परिहारः।

## ॥ गादाधरी ॥

केचित्तु साध्यात्मकाभाव-निरूपितप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वं विवक्षितम्, स च सम्बन्धो यत्सम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभावः साध्यात्मकः सः इति नोक्तानुपपत्तिः ।

---

**केचित्तु इति ॥** साध्याभावस्य यो अभावः सः साध्यात्मकः । तस्य च प्रतियोगी साध्याभावः । इत्थं च साध्यात्मकाभावनिरूपिता प्रतियोगिता साध्याभावे अस्ति । तदवच्छेदकः सम्बन्धः तत्र तत्र भिन्नः । यथा-




अतः वह्निसाध्यके स्वरूपसम्बन्धः तादृशः न तु कालिकः ।




अतः आकाशाभावाभावसाध्यके कालिकसम्वन्धः तथा।




अतः घटत्वाभावसाध्यके समवायसम्वन्धः तादृशः ।

## ॥ गादाधरी ॥

**अथ समवायेन प्रमेयत्वावच्छिन्नसाध्यक-द्रव्यत्वप्रकारक-प्रमाविषयत्वादि-हेतुकस्थले कालिकसम्बन्धस्यापि, तत्सम्बन्धावच्छिन्नप्रतियोगिताक-घटाभावरूप-प्रमेयनिरूपितप्रतियोगितावच्छेदकत्वात्, तेन सम्बन्धेन साध्याभाववति काले हेतोः वृत्तेरव्याप्तिः ।**

**न च साध्यनिरूपितस्वनिष्ठ-प्रतियोगितावच्छेदक-सम्बन्धनिवेशात् नायं**

---

**अथेति ॥** घटः, समवायेन प्रमेय(रूपं)वान्, द्रव्यत्वप्रकारकप्रमाविशेष्यत्वात् इत्यनुमानम् । द्रव्यत्वप्रकारकप्रमा= 'घटः द्रव्यम्' ।

अत्र द्रव्यत्वस्यैव हेतुत्वे समवायः हेतुतावच्छेदकसम्वन्धः स्यात् । तथा सति साध्याभाववति सामान्यादौ तेन सम्वन्धेन वृत्तिः अप्रसिद्धा स्यात् । अतः विशेष्यत्वस्य हेतूकरणम् । इदानीं च स्वरूपसम्वन्धः हेतुतावच्छेदकः इति नाप्रसिद्धिः।

अत्र प्रमेयस्य साध्यत्वात् सर्वोऽप्यभावः साध्यात्मकः भवति । यथा-

घटः,तस्य — अभावः (साध्यात्मकः)



कालिकेन

एवं च कालिकसम्वन्धोऽपि साध्यात्मकाभावनिरूपितप्रतियोगितायां अवच्छेदकः भवति । तेन च सम्वन्धेन साध्याभावः कालेऽस्तीति अव्याप्तिः ।

**नचेति ॥** स्वं = साध्याभावः । साध्यनिरूपितप्रतियोगिता साध्याभावनिष्ठा भवेत् । यथा-



## ।। गादाधरी ।।

दोषः । कालिकसम्बन्धावच्छिन्न-घटाभावादिरूपप्रमेयस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताया घटादावेव सत्त्वात् कालिकसम्बन्धस्य समवायसम्बन्धावच्छिन्न-प्रमेयाभावात्मकस्व-निष्ठप्रतियोगितावच्छेदक-सम्बन्धत्वविरहादिति वाच्यम्, तादृशप्रमेयाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावः तस्यापि प्रमेयत्वेन साध्यतया तन्निरूपित-तादृशप्रमेयाभावनिष्ठ-प्रतियोगितावच्छेदकत्वस्य कालिकसम्बन्धेऽपि अक्षततया अव्याप्तेर्दुर्वारत्वात्।

न च यावत्साध्यनिरूपितत्वेन प्रतियोगिता विशेषणीया। तथा च उपदर्शिताभावात्मक-यत्किञ्चित्प्रमेयनिरूपित-स्वनिष्ठप्रतियोगितावच्छेदककालिक-

---

प्रमेयसाध्यके च साध्याभावो नाम समवायेन प्रमेयाभावः। पूर्वं गृहीतः यः घटस्य कालिकेन अभावः तादृशाभावीया प्रतियोगिता च घटनिष्ठा। न तु प्रमेयाभावनिष्ठा। अतः न कालिकः सम्बन्धः लक्षणघटकः।

**तादृशप्रमेयाभावस्येति** ।। समवायेन प्रमेयाभावस्येत्यर्थः। स्वनिष्ठत्वनिवेशेऽपि कालिकसम्बन्धः नैव वारयितुं शक्यः। तथा हि-




**यावत्साध्यनिरूपितेति** ।। स्वनिष्ठ-प्रतियोगितायां यावत्साध्यनिरूपितत्वं विशेषणीयमित्यर्थः। वह्निसाध्यके-



## ॥ गादाधरी ॥

सम्बन्धमादाय न दोष इति वाच्यम्। असमवेतप्रमेयस्य 'समवाय-सम्बन्धा-वच्छिन्न-प्रमेयाभावोऽत्र नास्ति' इति प्रत्ययाविषयतया तस्य तादृशप्रमेया-

---

प्रमेयसाध्यके च इदानीं न कालिकः सम्बन्धः सङ्गृह्यते।

साध्यं=यावत्प्रमेयं, तस्य — अभावः, तस्य — अभावः (यत्किञ्चित् प्रमेयरूपः)




सर्वस्यैव अभावस्य स्वरूपसम्बन्धेन अभाव एव अभावप्रतियोगिरूपः। न तु सम्बन्धान्तरेण। अतः प्रमेयाभावस्य कालिकेन अभावः न प्रतियोगिरूपः। अपि तु अतिरिक्तः कश्चन अभावः। तस्मात् न तस्य यावत्प्रमेयरूपत्वम्। स्वरूपेण अभावस्तु तथा भवति-

साध्यं=प्रमेयं, तस्य — अभावः, तस्य — अभावः। (यावत्साध्यरूपः)




एवं च स्वरूपसम्बन्ध एव लक्षणघटकः, न कालिकः। तस्मान्नाव्याप्तिः।

**असमवेतप्रमेयस्येति** ॥ समवायसम्बन्धेन अविद्यमानस्य प्रमेयस्येत्यर्थः।

असमवेतप्रमेयाः= सामान्यत्वं, विशेषत्वं, समवायः, अभावः ...।

समवेतप्रमेयाः=द्रव्यं, गुणः, कर्म, सामान्यं, विशेषः।

द्रव्यं — गुणः — कर्म — सामान्यम् — विशेषः

↓ समवायेन

द्रव्यम्

सामान्यत्वम् — विशेषत्वम् — समवायः — अभावः

↓ समवायेन ↓ समवायेन ↓ समवायेन ↓ समवायेन

× × × ×

## ॥ गादाधरी ॥

भावाभावत्वे मानाभावात्, तादृशप्रमेयाभावनिष्ठयावत् - प्रमेयनिरूपित-प्रतियोगित्वाप्रसिद्ध्या उक्तस्थले अव्याप्तितादवस्थ्यात्।

न च साध्यतावच्छेदकसम्बन्धेन वृत्तिमत् यावत्साध्यनिरूपितप्रतियोगिताया निवेशनीयतया नोक्ताप्रसिद्धिरिति वाच्यम्, सर्वत्र समवायिन्या एकया सत्तयैव

---

द्रव्य-गुण-कर्मसु समवायेन प्रमेयस्य सत्वात् 'समवायेन प्रमेयं नास्ति' इति प्रतीतिः तेषु न भवति। किन्तु सामान्यादिषु एव। अतः द्रव्यादित्रिषु समवायेन प्रमेयाभावः नास्ति। तस्मादेव तेषु त्रिषु 'समवायसम्बन्धावच्छिन्नप्रतियोगिताकः प्रमेयाभावः स्वरूपेण नास्ति' इति वक्तुं शक्यते। सामान्यादिषु तादृशः प्रमेयाभावः स्वरूपेण अस्ति इति कारणतः तेषु 'तादृशः अभावः नास्ति' इति नैव वक्तुं शक्यते। इत्थं च समवायेन प्रमेयाभावस्य स्वरूपेण अभावः समवेतप्रमेय समनियतः। अतः सः अभावः समवेतप्रमेयरूपः (द्रव्य-गुण-कर्म-सामान्य-विशेषाः)। न तु यावत्प्रमेय(समवाय-अभाव)रूपः। ततश्च यावत्साध्यनिरूपितप्रतियोगितैव अप्रसिद्धा।

**न च साध्यतावच्छेदकेत्यादि ॥** प्रकृते साध्यतावच्छेदकः सम्बन्धः समवायः। तेन सम्बन्धेन वृत्तिमत् यावत्साध्यं= समवेतप्रमेयम्। उक्तप्रमेयाभावस्य अभावः समवेतप्रमेयरूपः। अत एव सः साध्यतावच्छेदकसम्बन्धेन वृत्तिमत् यावत्साध्यरूपः। तन्निरूपिता भवति प्रमेयाभावनिष्ठा प्रतियोगिता। अतो नाप्रसिद्धिः इति भावः।

**सर्वत्र समवायिन्येति ॥** 'समवायेन प्रमेयाभावः अत्र नास्ति' इति प्रतीतिः द्रव्य-गुण-कर्मसु भवति। कुतः? तत्र समवायेन प्रमेयस्य सत्वात्। कोऽसौ प्रमेयः ? गुणश्चेत् द्रव्ये एव सा प्रतीतिः स्यात्। न गुणे। तत्र तस्याभावात्। एवमेव गुणत्वं गुणे एव, कर्मत्वं कर्मणि एव। यदि चैते सर्वेऽपि तत्र तत्र तादृशप्रतीतिविषयाः इति उच्यन्ते तर्हि गौरवम्। एकस्याः सत्तायाः तादृशप्रतीतिविषयत्वे च लाघवम्। न च तथा सति किञ्चिद्बाधकमस्ति। सत्तायाः त्रिष्वपि अनुगतत्वात्। अतः प्रमेयाभाव-

## ॥ गादाधरी ॥

तादृशप्रमेयाभावाभाववत्ताप्रतीतिनिर्वाहे सर्वसमवाय्यसङ्ग्राहक-गुणादीनां तादृशप्रमेयाभावाभावत्वे मानाभावेन दर्शिताप्रसिद्धेः दुर्वारत्वादिति चेन्न।

साध्यतावच्छेदकसम्बन्धेन वृत्तिमद् यत्किञ्चित्साध्यनिरूपित-स्वनिष्ठ-प्रतियोगितावच्छेदक-सम्बन्धनिवेशेनैवोपपत्तेः । कालिकसम्बन्धावच्छिन्नप्रति-

---

स्याभावः सत्तारूपः एव। तस्मात् तदीया प्रतियोगिता केवलं सत्तानिरूपिता। न तु साध्यतावच्छेदकसम्वन्धेन वृत्तिमत् यावत्साध्यनिरूपिता। अतः पुनः अप्रसिद्धिः।

**सर्वसमवायीति** ॥ समवायिनः = द्रव्यं, गुणः, कर्म। सर्वसमवायिसङ्ग्राहिका= सत्ता। सर्वसमवायि असङ्ग्राहकाः - गुणादयः।




यथा- 'अयं मनुष्यः' इति प्रतीतेः नियामकः न स्त्रीत्वं, नापि पुंस्त्वम्। अननुगमात्। किन्तु उभयानुगतम् मनुष्यत्वसामान्यम्।



## ॥ गादाधरी ॥

योगिताकस्य दर्शितसाध्याभावाभावस्य साध्यत्वेऽपि तस्य साध्यतावच्छेदक-समवायसम्बन्धेनावृत्तित्वात्।

न चैवमपि कालिकसम्बन्धेन प्रमेयसाध्यककालत्वादिहेतावव्याप्तिः। कालिकसम्बन्धावच्छिन्नप्रमेयाभावस्य यः कालिकसम्बन्धावच्छिन्नाभावः तस्य

---

**दर्शितसाध्याभावाभावस्येति ॥** समवायेन प्रमेयाभावस्य कालिकेन यो अभावः तस्येत्यर्थः। स चाभावः पूर्वोक्तरीत्या न प्रतियोगिरूपः। किन्तु अतिरिक्तः कश्चन अभावः। तस्य च न समवायः सम्बन्धः। किन्तु स्वरूपं सम्बन्धः। अतः साध्यता-वच्छेदकेन समवायेन वृत्तिमान् सः न भवतीति न कालिकः सम्बन्धः लक्षण-घटकः। **साध्यत्वेऽपि=** साध्यात्मकत्वेऽपि।

**नचैवमपीति ॥** पूर्वं साध्यतावच्छेदकसम्बन्धः समवायः। अत्र तु कालिकः इति विशेषः। समवायेन प्रमेयसाध्यके साध्याभावस्य कालिकेन अभावग्रहणे तस्य भावरूपत्वाभावात् साध्यतावच्छेदकीभूतसमवायसम्बन्धेन न वृत्तित्वं इति कालिक-सम्बन्धस्य असङ्ग्रहः। प्रकृते च साध्यतावच्छेदकः सम्बन्धः कालिक इति साध्याभावस्य कालिकेन अभावग्रहणे तस्यापि साध्यतावच्छेदकसम्बन्धेन वृत्तित्वं सम्भवतीति कालिकसम्बन्धस्यापि सङ्ग्रहः। यथा-

१. समवायेन प्रमेयसाध्यके -

साध्यं= प्रमेयं, साध्याभावः= प्रमेयाभावः। साध्यतावच्छेदकसम्बन्धेन वृत्तिमत् साध्यं= प्रमेयाभावस्य **स्वरूपेण** अभावः।

२. कालिकेन प्रमेयसाध्यके-

साध्यम्= प्रमेयं, साध्याभावः= प्रमेयाभावः। साध्यतावच्छेदकसम्बन्धेन वृत्तिमत् साध्यं= प्रमेयाभावस्य **कालिकेन** अभावः।

**स्वाभावात्मकस्येति ॥** साध्याभावाभावात्मकस्येत्यर्थः। **प्रमेयत्वेन=** प्रमेयात्मकत्वेन। अत एव **साध्यस्य=** साध्यात्मकस्य। अस्य च प्रतियोगिताव-च्छेदकेत्यत्र एकदेशप्रतियोगितायां अन्वयः।

## ॥ गादाधरी ॥

स्वाभावात्मकस्य, प्रमेयत्वेन साध्यस्य प्रतियोगितावच्छेदकीभूतकालिकसम्बन्धेन कालिकसम्बन्धावच्छिन्नप्रमेयाभावाधिकरणे हेतोर्वृत्तेरिति वाच्यम्, तादृश-प्रतियोगितावच्छेदकीभूत-यत्सम्बन्धेन साध्यवद्भिन्नवृत्तित्वमभावस्य तत्सम्बन्धेन

---

**तादृशप्रतियोगितावच्छेदकेति ॥** एवं च लक्षणं - साध्यवद्भिन्नवृत्तिः यः साध्याभावः, साध्यतावच्छेदकसम्बन्धेन वृत्तिमत् यत्किञ्चित्साध्यनिरूपित-स्वनिष्ठ-प्रतियोगितावच्छेदकेन येन सम्बन्धेन साध्यवद्भिन्नवृत्तिः भवति साध्याभावः तेन सम्बन्धेन तद्वद्वृत्तित्वं इति। साध्यात्मकाभावनिरूपितप्रतियोगितावच्छेदकसम्बन्धे साध्यवद्भिन्नवृत्तितावच्छेदकत्वं इदानीं अधिकं निविष्टम्। प्रकृते च कालिकः सम्बन्धः साध्यनिरूपितप्रतियोगितावच्छेदकः। न तु साध्यवद्भिन्नवृत्तितावच्छेदकः। साध्यवद्भिन्ने नित्ये आत्मादौ प्रमेयाभावस्य कालिकेन अवृत्तेः। अतः न कालिकः सम्बन्धः लक्षणघटकः। किन्तु स्वरूपसम्बन्ध एव तथा। यथा-

१. अ) आ)

साध्यं= वह्निः

तस्य — संयोगेन साध्यवान्= पर्वतः

साध्याभावः= अभावः साध्यवद्भिन्नः= ह्रदः

तस्य — **स्वरूपेण** ⟶ ↓

साध्यात्मकः अभावः = अभावः वह्न्यभावः

२. अ) आ)

साध्यं= प्रमेयम् साध्यवान् = घटादिः

तस्य — कालिकेन

साध्याभावः= अभावः साध्यवद्भिन्नः=आत्मादयः नित्याः

तस्य — कालिकेन ⟶ × ↓

साध्यात्मकाभावः= अभावः प्रमेयाभावः

अतः न कालिकः सम्बन्धः साध्यवद्भिन्नवृत्तितावच्छेदकः। किन्तु स्वरूपमेव।

## ॥ गादाधरी ॥

तद्वदवृत्तित्वस्य विवक्षणीयत्वात्। उक्तस्थले च साध्याभावस्य कालिकसम्बन्धेन साध्यवद्भिन्नेऽवृत्तेः।

अथैवं तादृशप्रतियोगितायां स्वनिष्ठत्वनिवेशो विफलः। तदनिवेशे 'घटभिन्नं घटत्वाभावात्' इत्यादौ घटभेदात्मकसाध्य-निरूपितप्रतियोगितावच्छेदक-तादात्म्यसम्बन्धेन घटत्वात्मक-साध्याभाववति घटत्वे घटत्वाभावरूपहेतोः वृत्तेः

---

**घटभिन्नमिति ॥** अत्र साध्यं = घटभेदः। साध्यात्मकाभावः= घटभेदः। तन्निरूपितप्रतियोगिता घटनिष्ठा। तस्यां अवच्छेदकः सम्बन्धः तादात्म्यम्।

साध्याभावः= घटभेदाभावः= घटत्वम्। भेदाभावस्य भेदप्रतियोगितावच्छेदकरूपत्वात्।




अतः साध्याभावः घटत्वम्। तच्च तादात्म्येन घटत्वे एव अस्ति। तत्र च घटत्वाभावरूपः हेतुरपि अस्ति इति अव्याप्तिः। इयं च अव्याप्तिः द्वेधा परिहर्तुं शक्यते-

१. प्रतियोगितायां स्वनिष्ठत्वनिवेशेन।

२. सम्बन्धे साध्यवद्भिन्नवृत्तितावच्छेदकत्वनिवेशेन च।

१. स्वनिष्ठत्वनिवेशेन - स्वं= साध्याभावः = घटत्वम्। साध्यं= घटभेदः। साध्यनिरूपितप्रतियोगिता घटनिष्ठा न तु घटत्वनिष्ठा इति।

## ॥ गादाधरी ॥

अव्याप्तिप्रसक्तावपि तादृशाव्याप्तेः ईदृशविवक्षयैव वारणसम्भवाद्। घटत्वरूप-साध्याभावस्य साध्यनिरूपितप्रतियोगितावच्छेदक-तादात्म्यसम्बन्धेन साध्य-वद्भिन्ने घटेऽवृत्तेः।

न चैवं तादृशसाध्यस्य तादृशसम्बन्धेन साध्यवद्भिन्नवृत्तिरभाव एवाप्रसिद्ध इति कथमव्याप्तिपरिहार इति वाच्यम्, घटभेदस्य घटत्वाभावसमनियतत्वेन तदभिन्नतया घटत्वेऽपि समवायसम्बन्धावच्छिन्नायाः तादृशप्रतियोगितायाः सत्त्वेन तादृशप्रतियोगितावच्छेदकसमवायेन साध्यवद्भिन्नघट-वृत्तिघटत्वरूप-साध्या-भावस्य प्रसिद्धिसम्भवात्।

---

२.साध्यवद्भिन्नवृत्तितावच्छेदकत्वनिवेशेन- साध्यनिरूपित-प्रतियोगितावच्छेदकः सम्बन्धः=तादात्म्यम्। साध्यवद्भिन्न-वृत्तितावच्छेदकसम्बन्धः = समवायः। यथा-साध्यवान् = पटः। साध्यवद्भिन्नः= घटः। साध्याभावः= घटत्वम्। तच्च घटे समवायेन विद्यते। एवञ्च तादात्म्य-सम्बन्धः साध्यवद्भिन्नवृत्तितावच्छेदकः न भवतीति न तमादाय पूर्वोक्ताव्याप्तिः।

इत्थम् अव्याप्तिः द्वेधापि परिहर्तुं शक्यते। परन्तु पूर्वोक्तरीत्या सम्बन्धे साध्य-वद्भिन्नवृत्तितावच्छेदकत्वनिवेशः आवश्यकः। तेनैव च प्रकृताव्याप्तिः परिहृता भवति। अतः विफलः स्वनिष्ठत्वनिवेशः इति पूर्वपक्षः।

**अप्रसिद्ध इति ॥** उभयविशेषणविशिष्टः एकः सम्बन्धः अप्रसिद्धः इत्यर्थः।

१. साध्यनिरूपितप्रतियोगितावच्छेदकः = तादात्म्यसम्बन्धः।

२. साध्यवद्भिन्नवृत्तितावच्छेदकः = समवायः।

**प्रसिद्धिसम्भवात् इति ॥** समवायः एव तादृशः सम्बन्धः। तथा हि-

घटभेदः $\overset{\text{(समनियतः)}}{\longleftrightarrow}$ घटत्वाभावः।

तस्मात् घटभेदः = घटत्वाभावः।

## ॥ गादाधरी ॥

तादृशाभावयोर्भेदे स्वनिष्ठत्वस्य प्रतियोगिताविशेषणत्वेऽपि घटत्वरूप-साध्याभावनिष्ठ-साध्यनिरूपितप्रतियोगित्वाप्रसिद्ध्या तद्दोषतादवस्थ्यात्।

संयोगिभेदस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वरूपवैधर्म्येण संयोगाभावाभेदा-सम्भवेऽपि संयोगवत्त्वप्रकारकप्रमाविषयत्वाभावाभेदे बाधकाभावात् स्वरूप-

---

इत्थं च घटभेदस्य प्रतियोगि =




अतः समवायः साध्यनिरूपितप्रतियोगितावच्छेदकः साध्यवद्भिन्नवृत्तितावच्छेद-कश्च। साध्यवद्भिन्ने घटे तेन सम्बन्धेन साध्याभावस्य= घटत्वस्य विद्यमानत्वात्। अतो नाप्रसिद्धिः।

**तद्दोषतादवस्थ्यादिति** ॥ साध्यनिरूपितप्रतियोगिता घटनिष्ठा। न तु स्वनिष्ठा= घटत्वनिष्ठा। अतः साध्यनिरूपिता अथ च स्वनिष्ठा प्रतियोगिता अप्रसिद्धा। सेयं अप्रसिद्धिः घटत्वाभाव-घटभेदयोः अभेदविवक्षयैव परिहरणीया। तद्यथा -




**व्याप्यवृत्तित्वेति** ॥ संयोगिभेदः व्याप्यवृत्तिः। संयोगाभावः अव्याप्यवृत्तिः। अतः घटभेद-घटत्वाभावयोरिव नानयोः ऐक्यमिति कथमत्र अप्रसिद्धिवारणम् इति आक्षेपः।

## ॥ गादाधरी ॥

**सम्बन्धस्यापि साध्यनिरूपित-प्रतियोगितावच्छेदकसम्बन्धतया तेन सम्बन्धेन साध्यवद्भिन्नवृत्तेः तादृशप्रमाविषयत्वरूप-साध्याभावस्य प्रसिद्ध्या 'संयोगिभिन्नं गुणत्वात्' इत्यादौ अव्याप्तेः अनवकाशादिति चेन्न।**

---

**स्वरूपसम्बन्धस्यापीति** ॥ संयोगिभेदः व्याप्यवृत्तिः, संयोगवत्त्वप्रकारकप्रमा ('अयं संयोगी' इति प्रमा) विषयत्वाभावश्च व्याप्यवृत्तिः । अतः तौ उभौ समनियततया अभिन्नौ। तथाच स्वरूपसम्बन्ध एव विशेषणद्वयविशिष्टो भवति यथा -

अ. साध्यं= संयोगिभेदः ×→ १. संयोगी
=संयोगवत्त्वप्रकारक प्रमाविशेष्यत्वाभावः ×→ २. संयोगवत्त्वप्रकारकप्रमाविशेष्यत्वं
↓
प्रतियोगिता
(↓)
**स्वरूपसम्बन्धः**

आ. साध्याभावः= संयोगवत्त्वप्रकारकप्रमाविशेष्यत्वम्।
↓ **स्वरूपसम्बन्धेन**
साध्यवद्भिन्नः= वृक्षः

अतः साध्यनिरूपितप्रतियोगितावच्छेदकः, साध्यवद्भिन्नवृत्तितावच्छेदकश्च स्वरूपसम्बन्धः भवति।

एवं च कुत्रापि अव्याप्तेरभावात् प्रतियोगितायां स्वनिष्ठत्वनिवेशः विफलः।

## ॥ गादाधरी ॥

प्रतियोगितायां स्वनिष्ठत्वानिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगिताके आकाशाभावाभावादौ साध्ये आत्मत्वादावव्याप्तेर्दुर्वारत्वात्। तादृशसाध्यस्य यः कालिकसम्बन्धावच्छिन्नाभावः दैशिकविशेषणतासम्बन्धावच्छिन्नतदभावस्य तादृशसाध्यस्वरूपतया दैशिकविशेषणतासम्बन्धस्य साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धत्वात्, तेन सम्बन्धेन आकाशाभावरूपसाध्याभावस्य साध्य-

---

**कालिकसम्बन्धावच्छिन्नेत्यादि** ॥ इदं सदनुमानम्-




तस्मात्-

आकाशाभावस्य कालिकेन अभावः (साध्यं) → आत्मा (पक्षः) ← आत्मत्वम् (हेतुः)

स्वनिष्ठत्वानिवेशे अत्राव्याप्तिः -



## ॥ गादाधरी ॥

**वह्निन्ने काले हेतुमति च वृत्तेः । प्रतियोगितायां स्वनिष्ठत्वनिवेशे च दैशिक-विशेषणताया आकाशाभावनिष्ठ-साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्ध-त्वविरहेणैव अव्याप्तेरनवकाशात् ।**

---

अत्र साध्यात्मकाभावनिरूपिता प्रतियोगिता तृतीयाभावनिष्ठा । तस्यां अवच्छेदकः सम्वन्धः स्वरूपसम्वन्धः । तेन सम्वन्धेन आकाशाभावरूपसाध्याभावः साध्यवह्निन्ने काले आत्मनि च वर्तते । अतः अव्याप्तिः । स्वनिष्ठत्वनिवेशे च तृतीयाभावः न साध्यतावच्छेदकीभूत-स्वरूपसम्वन्धावच्छिन्न-प्रतियोगिताक-साध्याभावात्मकः इति नाव्याप्तिः । प्रकृते स्वनिष्ठप्रतियोगितावच्छेदकसम्वन्धः कालिकः एव भवति-

साध्यात्मकाभावः = आकाशाभावस्य कालिकेन अभावः




कालिकसम्वन्धेन च साध्याभाववान् नात्मा, किन्तु कालः । तत्र आत्मत्वं अवृत्ति इति नाव्याप्तिः ।

अत्रेयं आशङ्का- स्वरूपसम्वन्धोऽपि साध्यनिरूपित-स्वनिष्ठप्रतियोगितावच्छेदकः भवति । तथा हि-

## ॥ गादाधरी ॥

न च साध्यनिरूपितस्वनिष्ठप्रतियोगितानिवेशे साध्याभावपदोपादानवैयर्थ्यम् अभावान्तरनिष्ठप्रतियोगितायाः साध्यनिरूपितत्वविरहेणैव तद्व्यावृत्तेरिति वाच्यम् । स्वपदार्थस्य द्विधा निवेशेन साध्याभावनिष्ठसाध्यीयप्रतियोगिता-

---

[१] आकाशाभावः

तस्य ⟶ कालिकेन

(साध्यं) [२] अभावः

तस्य ⟶ स्वरूपेण

(साध्याभावः) [३] अभावः

तस्य ⟶ स्वरूपेण

(आकाशात्मकः अभावः) [४] अभावः

अत्र चतुर्थाभावनिरूपितप्रतियोगिता तृतीयाभावनिष्ठा। तृतीयाभावश्च आकाशाभावरूप इति भवति साध्याभावः । तादृशस्वनिष्ठप्रतियोगितायां स्वरूपसम्बन्धः अवच्छेदकः । अतः कथं स्वनिष्ठत्वनिवेशेऽपि स्वरूपसम्बन्धस्य लक्षणाघटकत्वनिर्वाहः, इति।

अत्रोच्यते - यद्यपि अत्र प्रतियोगिता स्वनिष्ठा। अथापि सा साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्साध्यनिरूपिता न भवति । चतुर्थाभावस्य आकाशात्मकतया साध्यरूपत्वाभावात् साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्त्वाभावाच्च। अतः न दोषः।

**वैयर्थ्यमिति ॥** वह्निसाध्यके ह्रदवृत्ति-गगनाभावमादाय अव्याप्तेः वारणाय अभावे साध्यीयत्वं निविष्टम्। प्रतियोगितायां स्वनिष्ठत्वनिवेशे च नैतादृशाव्याप्तिप्रसक्तिः। स्वपदस्य समभिव्याहृतपदान्तरार्थपरामर्शित्वेन साध्यवद्भिन्नवृत्तिः, लक्षणघटकः अभावः एव तेन उपादेयः। स च अभावः यदि गगनाभावः तर्हि स्वपदेनापि तस्यैव ग्रहणं स्यात्। परन्तु गगनाभावनिष्ठा प्रतियोगिता साध्यनिरूपिता न भवति। किन्तु वह्न्यभाव-निष्ठ-प्रतियोगितैव । तस्मात् अगत्या साध्यवद्भिन्नवृत्ति-अभावपदेन साध्याभाव एव ग्राह्य इति व्यर्थं अभावे साध्यीयत्वनिवेशनम्।

**स्वपदार्थस्य द्विधाऽनिवेशेनेति ॥** स्वपदार्थः = साध्याभावः। द्विधा निवेशः=

## ।। गादाधरी ।।

वच्छेदकसम्बन्धेन साध्याभाववत्त्वनिवेशध्रौव्येण तत्पदवैयर्थ्यानवकाशात् । तादृशसम्बन्धेन साध्यवद्भिन्नवृत्ति यत् तद्वत्त्वमात्रनिवेशे साध्यवद्भिन्नवृत्त्यभावान्तरवति हेतोर्वृत्त्या अनुपपत्तेरित्याहुः ।

अत्रेदं बोध्यम्- साध्यवत्त्वग्रहविरोधिग्रहविषयसम्बन्धेन, साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धेन वा नानुमित्यौपयिकव्याप्तिशरीरे अभावसम्बन्धनिवेशसम्भवः । साध्यादिभेदेन व्याप्तेर्भेदात् लाघवेन तत्तत्साध्यकस्थले तत्तत्साध्याभाववति दैशिक-कालिकविशेषणता-समवायादिसंसर्गाणामेव विशिष्य अभावसम्बन्धतया निवेशौचित्यात् । उक्तगुरुरूपेण विशेषणता-विशेषादीनां

---

स्वत्वेन साध्याभावत्वेन च । एवं निवेशः न क्रियते । किन्तु, उभयत्रापि एकरूपेणैव अर्थात् साध्याभावत्वेनैव निवेशः क्रियते । तेन फलितं लक्षणमाह - **साध्याभावनिष्ठेत्यादिना ।**

अयं भावः । सम्बन्धशरीरे स्वपदं परित्यज्य साध्याभावपदं निवेश्यते । तथा च साध्यनिरूपित साध्याभावनिष्ठ प्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्वं ग्राह्यं इति स्यात् । इदानीं च सम्बन्धशरीरे स्वपदस्यैव अभावात् न लक्षणघटकः अभावः ग्राह्यः इति निर्वन्धः । अतः तादृशः सम्बन्धः प्रकृते स्वरूपसम्बन्धः । तेन सम्बन्धेन च गगनाभावमादाय वह्निसाध्यके अव्याप्तिः स्यात् । तत्परिहाराय साध्यपदं देयमेव ।

**अत्रेदं बोध्यमिति ।।** साध्यवत्वग्रहेत्यादि गदाधरोक्तपक्षः । साध्यनिरूपितेत्यादि केचित्काराणां पक्षः ।

**औचित्यात् इति ।।** तथा च वह्निसाध्यके स्वरूपसम्बन्धेन साध्याभाववद् अवृत्तित्वं व्याप्तिस्वरूपम् । घटत्वाभावसाध्यके समवायेन घटत्ववद् अवृत्तित्वं व्याप्तिस्वरूपम् । न चैवं सति सर्वत्र व्याप्तिः अनुगता= एकरूपा न स्यादिति वाच्यम् । इष्टापत्तेः । सम्बन्धस्य ऐक्येऽपि साध्यभेदेन व्याप्तेः भेदस्य आवश्यकत्वात् । तद्यथा वह्निसाध्यके 'वह्न्यभाववदवृत्तित्वम्' घटत्वाभावसाध्यके तु 'घटत्ववदवृत्तित्वम्' इति ।

उक्तरूपेण सम्बन्धस्य अनिवेशे हेतुद्वयम् - लाघवम्, तेन रूपेण सम्बन्धतायाः अप्रामाणिकत्वं चेति ।

## ॥ गादाधरी ॥

सम्बन्धताया अत्यन्ताप्रामाणिकतया तद्रूपावच्छिन्नस्य सम्बन्धविधया व्याप्ति-घटकत्वायोगाच्च।

परन्तु यादृशसाध्यकस्थले यादृशसम्बन्धः अभावसम्बन्धतया व्याप्तिघटकः तत्परिचयायैव दर्शितोक्तयः। तथा च यादृशसम्बन्धेन प्रकृतसाध्यवति तद्भिन्न-वृत्तिसाध्याभावो न वर्तते तादृशसम्बन्धेन तद्वत्त्वं निवेश्यम् इत्युक्त्यैव तत्परिचय-सम्भवात् इत्यलं वाग्जालेन।

तत्र च साध्याभाववत्पदेन साध्याभावत्वविशिष्टाधिकरणं विवक्षणीयम्। तेन गुणान्यत्वविशिष्टसत्ताभाववान् गुणत्वादित्यादौ विशिष्टस्यानतिरिक्ततया सत्ता-रूपसाध्याभावस्य गुणादौ सत्त्वेऽपि न क्षतिः। 'गुणे गुणान्यत्वविशिष्टसत्ताभावो नास्ति' इत्यप्रत्ययात् तत्र तादृशाभावत्वविशिष्टाधिकरणत्वानभ्युपगमात्।

---

१. वह्निसाध्यके 'स्वरूपसम्बन्धेन वह्नयभाववद् अवृत्तित्वम्' इत्युक्तौ लाघ-वम्। तत्परित्यज्य 'साध्यवद्भिन्नवृत्तितावच्छेदकसम्बन्धेन' इत्याद्युक्तौ गौरवम्।

२.स्वरूपसम्बन्धः स्वरूपत्वेनैव सम्बन्धः भवति। न तु उक्तगुरुरूपेण। अतः तेन रूपेण तेषां सम्बन्धत्वं अप्रामाणिकम्।

**परिचयायैवेति ॥** लक्षणाघटकत्वे सति लक्षणघटकपदार्थज्ञापकत्वं परिचाय-कत्वम्।

**गुणान्यत्वविशिष्टसत्ताभाववानिति ॥** अत्र साध्याभावः= गुणान्यत्व-विशिष्टसत्ता। सा च सत्तात्वेन गुणे अस्ति। न तु विशिष्टसत्ताभावाभावत्वेन इति नाव्याप्तिः।

## ॥ गादाधरी ॥

अथैतल्लक्षणे 'घटत्व-घटाकाशसंयोगान्यतराभाववान् आकाशत्वात्' इत्यादौ अव्याप्तिः। घटत्वस्य व्याप्यवृत्तितया तद्घटितान्यतराभाववद्भिन्ने घटे वर्तमानस्य घटाकाशसंयोगात्मकसाध्याभावस्य हेत्वधिकरणे गगनेऽपि वृत्तेः।

---

**घटत्वघटाकाशेति ॥**




आकाशे प्रतियोगिनः, अन्यतरस्य, संयोगस्य सत्वेऽपि सः अव्याप्यवृत्तिरिति अन्यतराभावोऽपि अस्ति। अतः साध्याधिकरणम् आकाशः -




तस्मात् साधु इदं अनुमानम्। अत्र साध्यवद्भिन्नः घटः। तत्र अन्यतरस्य व्याप्यवृत्तेः घटत्वस्यैव सत्वेन अन्यतराभावस्य अभावात्। प्रकृते साध्याभावः आकाशेऽपि अस्ति-



## ॥ गादाधरी ॥

**निरवच्छिन्नसाध्याभाववत्तानिवेशे च साध्यवद्भिन्नवृत्तित्वांश-वैयर्थ्यादिति चेन्न।**

**एतल्लक्षणकर्तृमते स्वप्रतियोगिसामानाधिकरण्य-स्वप्रतियोगिवैयधिकरण्य-रूपविरुद्धधर्माध्यासः अभावस्य भेदकः इत्येतादृशयुक्त्या द्रव्यवृत्तिसंयोगाभाव-गुणवृत्तिसंयोगाभावयोर्भेदसिद्धिः इति अव्याप्यवृत्तिसाध्यकस्थले अव्याप्तिः समाधीयते। तथा च घटाकाशसंयोगस्य उक्तान्यतराभावप्रतियोगित्वेऽपि न तदभावरूपता। तथासति तादृशविरुद्धधर्मयोः समावेशापत्तेः। तयोर्विरोधाभावे संयोगाभावस्यापि अधिकरणभेदेन भेदासिद्धेः अव्याप्यवृत्तिसाध्यके सर्वत्रैवा-व्याप्तेः। एतदभिप्रायेण लक्षणान्तरस्यावतारणीयत्वात् इति गगनेऽतिरिक्त एव तदभावः स्वीकरणीयः, स च न साध्यवद्भिन्नवृत्तिरिति न दोषः।**

---

**निरवच्छिन्नाभाववत्तानिवेशे इति ॥** साध्याभाववदवृत्तित्वम् इत्यत्र साध्या-भाववत्तायां= साध्याभावाधिकरणतायां निरवच्छिन्नत्वं निवेश्यते। प्रकृते साध्याभावः संयोग इति स्वीकारे तदधिकरणता आकाशे किञ्चिद्दिगवच्छिन्ना, न तु निरव-च्छिन्ना। साध्याभावपदेन घटत्वस्वीकारे निरवच्छिन्नतदधिकरणता घटे एव। तत्र च हेतुः अवृत्तिः इति नाव्याप्तिः।

**वैयर्थ्यादिति ॥** संयोगसाध्यके अव्याप्तिपरिहारार्थं साध्याभावे साध्यवद्भिन्नवृत्तित्वं निविष्टम्। साध्याभाववत्तायां निरवच्छिन्नत्वनिवेशे च तादृशसाध्याभावाधिकरण-तायाः वृक्षे अभावात् अव्याप्तेः प्रसक्तिरेव नास्ति। अतः साध्यवद्भिन्नवृत्तित्वविशेषणं व्यर्थम्।

**अन्यतराभावप्रतियोगित्वेऽपि इति ॥** द्वितीयाभावः प्रथमाभावप्रतियोगि-रूपः इति नियमेन अन्यतराभावप्रतियोगिनः संयोगस्य अन्यतराभावाभावरूपत्वं आवश्यकम्। परन्तु एवं सति संयोगस्य द्विष्ठत्वात् घटे आकाशे च अन्यतराभावाभावः एक एव अङ्गीकार्यः स्यात्। तथा च विरुद्धधर्मयोः समावेशप्रसङ्गः।

**लक्षणान्तरस्येति ॥** व्याप्यवृत्तित्व-अव्याप्यवृत्तित्वयोः विरोधो नास्ति। अतः

## ॥ गादाधरी ॥

साध्यवद्भिन्ने वर्तत इत्यनेनानवच्छिन्नाया एव वृत्तेः पर्यवसानान्न घटाकाश-संयोगात्मकाभावमादाय दोष इति तु न श्रद्धेयम्। तथा सति सुषुप्त्यादिकालावच्छेदेन अस्मदाद्यात्मवृत्तौ स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताक-ज्ञानत्वाद्यभावे साध्ये सुखादौ अव्याप्तिः।

---

गुणवृत्तिः संयोगाभावः वृक्षेऽपि अस्ति। तस्मात् अव्याप्यवृत्तिसाध्यके अव्याप्तिः तदवस्था इति दोषं द्वितीयलक्षणे उद्भाव्य भेदघटितं तृतीयं लक्षणं दीधितिकृता उत्तरत्र अवतार्यते। तेन ज्ञायते द्वितीयलक्षणसमन्वयावसरे व्याप्यवृत्तित्व-अव्याप्यवृत्तित्वयोः स्वीकृत एव विरोधः इति।

**अतिरिक्तः एव तदभावः**= संयोगरूपात् अतिरिक्तः कश्चन अभावः।

**न दोष इति ॥** अन्यतराभावस्य संयोगः, घटत्वं च प्रतियोगि। अतः अन्यतरा-भावाभावः तदुभयरूपः। तयोः संयोगः साध्यवद्भिन्ने न निरवच्छिन्नवृत्तिः। अतः तद्व्युदासः। अपि तु व्याप्यवृत्तेः घटत्वमात्रस्य सङ्ग्रहः। तच्च न आकाशे विद्यते। तस्मात् नाव्याप्तिः।

**अनवच्छिन्नाया एव वृत्तेरिति ॥** पूर्वं 'साध्याभाववदवृत्तित्वम्' इत्यत्र साध्याभाववत्तायां निरवच्छिन्नत्व-विशेषणप्रक्षेपः निराकृतः। इदानीं 'साध्य-वद्भिन्नवृत्तिः यः साध्याभावः' इत्यंशे साध्यवद्भिन्ननिरूपित-वृत्तौ निरवच्छिन्नत्व-निवेशः विचार्यते इति भेदः।

**अस्मदाद्यात्मवृत्तौ इति ॥** आत्मनि वृत्तिः यस्य इति बहुव्रीहिः। ज्ञानत्वाभावेऽस्य अन्वयः।

'आत्मा, सुषुप्तिकाले ज्ञानत्वाभाववान् सुखात्' इति अनुमानस्वरूपम्।

**स्वाश्रयाश्रयत्वेति ॥** स्वं= ज्ञानत्वम्। तदाश्रयः ज्ञानं। तदाश्रयः जाग्रत्कालीनः आत्मा। न तु सुषुप्तिकालीनः। तदानीं ज्ञानाभावात्।

## ।। गादाधरी ।।

**तत्र साध्यवद्भिन्ने ईश्वरे तादृशसम्बन्धेन निरवच्छिन्नवृत्तिकस्य ज्ञानत्वादि-रूपाभावस्य तेन सम्बन्धेन सुखाद्यधिकरणे अस्मदाद्यात्मन्यपि वृत्तेः। उत्पत्ति-कालावच्छिन्नघटादिवृत्तितादृशसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावादि-साध्यकघटत्वादिहेतावव्याप्तिश्च।**

---

स्वं= ज्ञानत्वम्



आश्रयः - ज्ञानम्



आश्रयः - जाग्रत्कालीनः आत्मा

**साध्यवद्भिन्ने ईश्वरे इति ।।** तज्ज्ञानस्य नित्यत्वात् उक्तसम्बन्धेन ज्ञानत्वाभावः कदापि ईश्वरे नास्ति।

**निरवच्छिन्नवृत्तिकस्येति ।।** जीवे ज्ञानत्वं उक्तसम्बन्धेन कालिकाव्याप्यवृत्ति। ईश्वरे तु नैवम्। अतः साध्यवद्भिन्ने निरवच्छिन्नवृत्तिः साध्याभावः ज्ञानत्वम्।

अत्र ज्ञानाभावस्यैव साध्यत्वे नाव्याप्तिप्रसक्तिः। साध्यवद्भिन्ने ईश्वरे विद्यमानस्य ज्ञानरूपस्य साध्याभावस्य जीवे अवृत्तेः। जीवेश्वरज्ञानयोः भेदात्। अतः ज्ञानत्वाभावस्य साध्यत्वं स्वीकृतम्।

ईश्वरेऽपि नित्यसुखाङ्गीकारे इदमनुमानं व्यभिचारि स्यात्। अतः अन्यत्राव्याप्ति-माह- **उत्पत्तिकालावच्छिन्नेति ।।**

**सत्ताभावेति ।।** घटे उत्पत्तिकाले सत्ताश्रयः गुणः कर्म वा नास्ति। अतः तत्र समवायसम्बन्धेन सत्तायाः सत्वेऽपि स्वाश्रयाश्रयत्वसम्बन्धेन सत्ता नास्ति। तस्मात् सदनुमानमिदम्।

### ॥ दीधितिः ॥

***द्वितीयलक्षणस्य दोषकथनम् -***

कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह-**साध्यवदिति** ॥

### ॥ गादाधर्री ॥

संयोगाभावनिष्ठयोः व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोः प्रतियोगिसामानाधिकरण्यप्रतियोगिवैयधिकरण्ययोः वक्ष्यमाणरीत्या न विरोध इत्यभिप्रायेण अव्याप्यवृत्तिसाध्यकस्थलेऽव्याप्त्या लक्षणान्तरमवतारयति- **कर्मादाविति** ॥

---

स्वं = सत्ता



आश्रयः - गुणः



आश्रयः - घटः (द्वितीयक्षणे)

अत्र साध्यवद्भिन्नः नित्यद्रव्यम्। तत्र सर्वदा सत्ताश्रयस्य गुणस्य सत्वात्।

इयं अव्याप्तिः साध्यवद्भिन्न-निरूपित-आधेयतायां निरवच्छिन्नत्वं निवेश्य नैव परिहर्तुं शक्या । प्रकृते सत्तारूपस्य साध्याभावस्य नित्यद्रव्ये निरवच्छिन्नवृत्तिकत्वात्। अतः अस्मदुक्तरीत्या प्रतियोगि-सामानाधिकरण्य-प्रतियोगिवैयधिकरण्ययोः अभावभेदकत्वं अङ्गीकृत्यैव परिहरणीया। प्रकृते सत्ताभावाभावः नित्यद्रव्ये कालिकव्याप्यवृत्तिः- सार्वकालिकः। घटादौ अव्याप्यवृत्तिः- असार्वकालिकः। तस्य च सत्तारूपत्वे सत्तायाः एकत्वात् विरुद्धधर्मयोः समावेशापत्तिः। अतः सः अभावः अतिरिक्तः एव अङ्गीकार्यः। स च साध्यवद्भिन्नवृत्तिः घटादौ नास्तीति नाव्याप्तिरिति।

**वक्ष्यमाणेति** ॥ उत्तरत्र पूर्वपक्षप्रकरणे वक्ष्यमाणेत्यर्थः । **न विरोध इति** ॥ प्रतियोगिसामानाधिकरण्यम् = प्रतियोगि-अधिकरण-वृत्तित्वं। तद्वैयधिकरण्यं = प्रतियोगि-अनधिकरणवृत्तित्वम्। न तु प्रतियोगि-अधिकरणवृत्तित्वाभावः येन भावाभावयोः विरोधः स्यात्। संयोगाभावः एक एव प्रतियोग्यधिकरणे द्रव्येऽपि अस्ति।

## ॥ गादाधरी ॥

इदं त्ववधेयम्, द्रव्यवृत्तिसंयोगाभावो न गुणादौ स्वीक्रियते। अपि तु क्लृप्त-तद्वृत्तिसंयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभावे एव संयोगाभावत्वं कल्प्यते। अनन्तगुणाद्यधिकरणे संयोगाभावकल्पनामपेक्ष्य तथाविधैकाभावे संयोगाद्य-भावत्वकल्पने लाघवात्। न च संयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभावे, द्रव्यत्वाभावे, द्रव्यभेदे, संयोगिभेदादौ वा संयोगाभावत्वं कल्प्यत इत्यत्र विनिगमकाभाव इति वाच्यम्, तादृशाभावानां समनियततयाऽभेदात्। एवञ्च द्रव्यवृत्तिसंयोगाभाव-गुणवृत्तिसंयोगाभावयोः भेदःसप्रमाण एव।

---

तदनधिकरणे गुणेऽपि अस्तीति स्वीकारे को विरोधः? एवञ्च साध्यवद्भिन्ने गुणे वर्तते यः साध्याभावः= कपिसंयोगाभावः। तद्वान् वृक्षः भवतीति अव्याप्यवृत्तिसाध्यके अव्याप्तिः वज्रलेपायिता इत्यर्थः।

**क्लृप्तेति ॥** संयोगवत्वप्रकारकप्रमा= 'अयं संयोगी' इति प्रमा। इयं प्रमा द्रव्ये एव भवति। न गुणादौ। अतः गुणादौ तादृशप्रमाविषयत्वाभावः क्लृप्तः। क्लृप्ते च तस्मिन् अभावे संयोगाभावत्वकल्पने लाघवम्-




एवञ्च गुणादौ संयोगाभावः उक्तप्रमाविषयत्वाभावरूपः। द्रव्ये च तादृशप्रमा-विषयत्वाभावः नास्ति। अतः द्रव्यवृत्तिसंयोगाभावः गुणवृत्तिसंयोगाभावात् भिन्नः।

**विनिगमकाभावः इति ॥** गुणे उक्तप्रमाविषयत्वाभाववत् द्रव्यत्वाभावादयोऽपि अनेके अभावाः सन्ति। तेषु कुत्र संयोगाभावत्वं कल्प्यते इत्यत्र नियामकं नास्तीति आक्षेपः। तेषां सर्वेषामेवाभावानां समनियततया अभेदात् सर्वत्र संयोगाभावत्व-कल्पनेऽपि एकत्रैव कल्पनेति लाघवं अपरिहार्यं इति समाधानम् -

## ।। गादाधरी ।।

**अथैवं द्रव्यत्वाभावादीनामपि आनन्त्यापत्तिः। कर्मादौ गुणवृत्तिद्रव्यत्वाभावो न कल्प्यते। अपि तु क्लृप्त तद्वृत्तिद्रव्यगुणान्यतरत्वाभावे एव तदभावत्वम् इत्यादितर्कगवेषणया कर्मादिवृत्तिद्रव्यत्वाद्यभावस्य गुणादिवृत्तितदभावतो भेदसिद्धिरिति चेत् इष्टमेवैतदधिकरणभेदेनाभावभेदवादिनाम्।**

---

१. संयोगवत्वप्रकारकप्रमाविषयत्वाभावः
२. द्रव्यत्वाभावः
३. द्रव्यभेदः
४. संयोगिभेदः
} समनियतत्वात् ऐक्यम्।

गुणः, कर्म, सामान्यम्, विशेषः, समवायः, अभावः

**अथैवमिति ।।** द्रव्यत्वाभावः गुणे कर्मादौ चास्ति। सोऽपि नैकः स्यात्। कर्मणि द्रव्यगुणान्यतरत्वं नास्ति। क्लृप्ते तस्मिन्नन्यतरत्वाभाव एव द्रव्यत्वाभावत्वं कल्प्यते लाघवात्-

द्रव्यत्वाभावत्वम्



← लाघवम्

द्रव्य-गुणान्यतरत्वाभावः

कर्म ↓ द्रव्यत्वाभावः    सामान्यम् ↓ द्रव्यत्वाभावः    विशेषः ↓ द्रव्यत्वाभावः    समवायः ↓ द्रव्यत्वाभावः।    अभावः

← गौरवम्

एवञ्च कर्मादिवृत्तिः द्रव्यत्वाभावः उक्तान्यतरत्वाभावरूपः, न गुणवृत्तिः अभावः तत्स्वरूपः। अतः तयोः भेदसिद्धिः इति आक्षेपः। इष्टापत्तिरिति परिहारः।

## ॥ गादाधरी ॥

न चैवं संयोगाद्यभावत्वकल्पनायां धर्मिणामप्यानन्त्यात् उक्तविनिगमकासम्भवः इति वाच्यम्, विनिगमनाविरहेऽपि द्रव्यत्वाभावादौ संयोगाद्यभावत्वकल्पनाया निष्प्रत्यूहत्वादिति।

---

**धर्मिणामपि आनन्त्यात् इति ॥** पूर्वोक्तदिशा संयोगाभावत्वकल्पने धर्मी संयोगवत्वप्रकारकप्रमाविषयत्वाभावः। स च एकः इति अनन्तगुणेषु संयोगाभावकल्पनापेक्षया एकस्मिन् विषयत्वाभावे संयोगाभावत्वकल्पने लाघवं पूर्वमुक्तम्। परन्तु अधिकरणभेदेन अभावसामान्यभेदे उक्तप्रमाविषयत्वाभावोऽपि गुणादौ नैकः। किन्तु गुणादिसमसङ्ख्याकः गुणभेदेन तस्यापि भेदात्। अतः गुणादौ संयोगाभावकल्पनां अपेक्ष्य तन्निष्ठविषयत्वाभावे संयोगाभावत्वकल्पने किं विनिगमकम्? इति आक्षेपः।

सत्यं, नास्ति अन्यतरमात्रकल्पने विनिगमकम्। अथापि विनिगमनाविरहेण उभयमपि सिद्ध्यति। तथा च उक्तविषयत्वाभावे संयोगाभावत्वकल्पनायां गुणवृत्तिसंयोगाभावात् द्रव्यवृत्तिसंयोगाभावस्य भेदः सिद्ध एवेति 'मानाभावः' इति दीधित्युक्तिः अयुक्ता इति गदाधरस्याशयः।

अधिकरणभेदेन संयोगवत्त्वप्रकारकप्रमाविषयत्वाभावानां भेदे विनिगमकासम्भवः यथा-

| | १ | २ | ३ | ४ |
|---|---|---|---|---|
| सं. अभावः ⟶ | गुणः | कर्म | सामान्यं | विशेषः |
| सं.अभावत्वम् ⟶ | सं. प्रकारक-प्रमाविषयत्वाभावः | विषयत्वाभावः | विपयत्वाभावः | विषयत्वाभावः |
| | १ | २ | ३ | ४ |

## ॥ दीधितिः ॥

*तृतीयलक्षणदोषकथनम्*

हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह- **सकलेति** ॥

## ॥ गादाधरी ॥

**हेतोरिति** ॥ नानाधिकरणकस्येत्यादिः । **अव्याप्तेरिति** ॥ 'एतद्रूपवान् एतद्रसात्' इत्यादौ एतद्रसाधिकरणे एतद्रूपाधिकरणस्य द्वित्वादिना भेदसत्त्वेऽपि व्यासज्यवृत्ति-धर्मानवच्छिन्नत्वेन साध्यवन्निष्ठप्रतियोगितायाः, प्रतियोग्यवृत्तित्वेन वा भेदस्य विशेषितत्वे लक्षणगमनसम्भवात् नासम्भवो दर्शितः ।

---

एवं च संयोगाभावत्वकल्पने धर्मिणः संयोगवत्त्वप्रकारकप्रमाविषयत्वाभावाः । तेऽपि चत्वारः । संयोगाभावकल्पनायां धर्मिणः गुणादयः । तेऽपि चत्वारः । अतः न लाघवतर्कस्यावसरः ।

**द्वित्वादिनेति** ॥ 'एतत्फलं एतद्रूपाधिकरण-तद्रूपाधिकरणोभयं न' इति भेदः । **व्यासज्यवृत्तीति** ॥ साध्यवन्निष्ठप्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं निविष्टम् । उक्तोभयभेदीयप्रतियोगिता च तादृशोभयत्वावच्छिन्नैव इति तद्व्यावृत्तिः । **प्रतियोग्यवृत्तित्वेनेति** ॥ भेदः प्रतियोग्यवृत्तिः भवेत् । उभयभेदश्च प्रत्येकवृत्तिरिति प्रतियोग्यवृत्तिः न भवतीति न तत्सङ्ग्रहः ।



### ॥ दीधितिः ॥

## *चतुर्थलक्षणम्*

साकल्यं साध्याभाववति साध्ये च बोध्यम्। साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः।

### ॥ गादाधरी ॥

**साकल्यमिति ॥** 'बोध्यम्' इत्यस्य विशेषणमित्यादिः। अत्र साध्याभाववति साकल्यविशेषणसत्त्व एव साध्ये तद्विशेषणव्यावृत्तिः सङ्गच्छते। अन्यथा साध्याभाववत्ताया हेतुमत्साधारण्येऽपि साध्याभाववद् यत्किञ्चिद्व्यक्तिनिष्ठाभाव-प्रतियोगित्वमादाय नानाव्यक्तिसाध्यकसद्धेतौ लक्षणसमन्वयसम्भवात्। अतः 'साध्ये तदभाववति च' इत्यनुक्त्वा साध्याभाववति साकल्यविशेषणं प्रथमतो दर्शितम्।

---

**व्यावृत्तिः सङ्गच्छत इति ॥** व्यावृत्तिः = प्रयोजनम्। साध्ये साकल्यस्य प्रयोजनं 'वह्निमान् धूमात्' इत्यत्र अव्याप्तेः वारणम्। तत्र पर्वतीयवह्न्यभाववति महानसे हेतोः सत्वात् अव्याप्तिः। साध्ये साकल्यदाने च सकलसाध्यानां अभावस्य अधिकरणं ह्रद एव भवतीति परिहारः। परन्तु साध्याभाववति साकल्याभावे इयं अव्याप्तिरेव न सम्भवति। साध्यपदेन पर्वतीयवह्निग्रहणेऽपि तदभावान् ह्रदः। तत्र हेतुः नास्तीति लक्षणसमन्वयसम्भवात्। **हेतुमत्साधारण्येपीति ॥ हेतुमति=** महानसादौ साध्याभावसत्वेऽपि। **यत्किञ्चिदिति ॥** ह्रदादिकं इत्यर्थः।




**इत्यनुक्त्वेति ॥** साध्यस्य प्रतियोगित्वेन प्रथमोपस्थितत्वात् मूले 'साध्ये साध्याभाववति च' इत्येव वक्तव्यमासीत् इत्यर्थः।

## ॥ गादाधरी ॥

न च साध्याभाववति साकल्यविशेषणासत्त्वेऽपि 'वह्निमान् पर्वतान्यत्वात्' इत्यादौ अतिव्याप्तिवारणमेव साध्ये साकल्यविशेषणप्रयोजनमस्ति । उभयत्र साकल्यविशेषणादाने यत्किञ्चित्साध्याभाववति पर्वते हेत्वभावसत्त्वेन अतिव्याप्तिः । साध्ये साकल्यविशेषणसत्त्वे तु ह्रदादेरेव सकलसाध्याभाववत्तया तत्र हेतुसत्त्वेनातिव्याप्त्युद्धारात् इति नोक्ताभिप्रायवर्णनं सम्यगिति वाच्यम् । साध्याभाववति साकल्यविशेषणासत्त्वे साध्ये साकल्यविशेषणस्योक्तातिव्याप्तिवारणप्रयोजनकत्वसम्भवेऽपि वक्ष्यमाणप्रयोजनस्यैव वास्तवतया तस्य साध्याभाववति साकल्यविशेषणसत्त्व एव सङ्गतेः आदौ तत्प्रदर्शनस्योचिततत्वात् ।

---

**वक्ष्यमाणप्रयोजनेति ॥** दीधितिकारेण वक्ष्यमाणं नानाव्यक्तिसाध्यकसद्धेतौ अव्याप्तिवारणरूपप्रयोजनमित्यर्थः ।

**वास्तवतयेति ॥** अवश्योपादेयविशेषणान्तरावारणीयप्रयोजनकत्वेन इत्यर्थः । धूमसाध्यक दुष्टहेतौ अतिव्याप्तेः परिहारार्थं साध्याभाववति साकल्यं अवश्यं उपादेयम् । तेनैव 'वह्निमान् पर्वतान्यत्वात्' इत्यत्रापि अतिव्याप्तिः परिहृता भवति । अतः तत्रातिव्याप्तिपरिहारः न साध्ये साकल्यविशेषणस्य वास्तवं प्रयोजनम् ।

अनेन जगदीशमतं निराकृतम् । सः साध्याभाववति साकल्यविशेषणासत्वेऽपि 'गगनावृत्तिधर्मवान् द्रव्यत्वात्' इत्यत्र अतिव्याप्तिं प्रदर्श्य तद्वारकत्वेन साध्ये साकल्यविशेषणस्य सार्थक्यमुक्त्वा 'तस्मात् साध्याभाववति साकल्यसत्वे एव साध्ये साकल्यविशेषणं सार्थकं इति प्राचां उक्तिः अयुक्ता ।' इति च निराकृतवान् । परन्तु गदाधरोक्तदिशा नेदं अतिव्याप्तिवारणं साध्ये साकल्यस्य वास्तवं प्रयोजनम्, साध्याभाववति साकल्यनिवेशादपि अतिव्याप्तिपरिहारसम्भवात् । तत्र हि गगनावृत्तियत्किञ्चिद्धर्मं पटत्वं आदाय तदभाववति गुणे हेत्वभावः अस्तीति अतिव्याप्तिः । साध्ये साकल्यदाने च तादृश-यावद्धर्मेषु गुणत्वादिकमपि अन्तर्भवतीति तदभाववत् गगनमेव । तत्र हेतुः वर्तते इति अतिव्याप्तेः परिहारः । परन्तु इयमतिव्याप्तिः साध्याभाववति साकल्यदानेपि परिहृता भवति । तादृशपटत्वाभाववत् सकलं गगनम् । तत्र हेतोः सत्वात् इति । यथा -

## ॥ गादाधरी ॥

वस्तुतस्तु साध्ये साकल्यविशेषणं परित्यज्य साध्याभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वनिवेशरूपकल्पान्तरस्य अवलम्बनीयतया चरममेव तत्प्रदर्शनमुचितम्। 'साध्ये तदभाववति च बोध्यम्' इत्युक्त्वा 'साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको वाऽभावो ग्राह्यः' इत्युक्तौ 'साध्याभाववति साकल्यं निवेश्यते, साध्याभावो वा एतादृशो निवेश्यते' इत्येतादृशविकल्पः प्रतीयेत। स चाविवक्षित इति तु सारम्।




**'साध्यतावच्छेदकावच्छिन्न'** इत्यादि अग्रिमदीधितिवाक्यम्। **स चाविवक्षित इति ॥** साध्ये साकल्यं, साध्याभावस्य साध्यतावच्छेदकावच्छिन्न-प्रतियोगिताकत्वं च समानार्थकम्। अत एव साध्ये साकल्यानिवेशे या अव्याप्तिः सा अभावे साध्यतावच्छेदकावच्छिन्नेत्यादि विशेषणदानेऽपि परिह्रियते। अतः तत्र विकल्पः समुचितः। न तु साध्याभाववति साकल्यं, साध्याभावस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वं च समानार्थकम्। अतः तत्र विकल्पः मूलकृतः नाभिप्रेतः। सकलसाध्यानाम् अभावः साध्यतावच्छेदकावच्छिन्नाभावश्च समनियतौ। अतः तयोः समानार्थकत्वम् -



## ॥ गादाधरी ॥

अव्याप्तिवारणाय साध्याभावे साकल्यविशेषणे 'धूमवान् वह्नेः' इत्यादौ साध्यतावच्छेदकीभूतसंयोगादि-सम्बन्धावच्छिन्नप्रतियोगिताक-सकलसाध्याभावाधिकरणं गुणादिरेव स्यात्। अयोगोलकादेः ह्रदासंयुक्तत्वावच्छिन्नप्रतियोगिताकाभावानधिकरणत्वात् इत्यतिव्याप्तिः।

---

**साध्याभावे साकल्यविशेषणे इति ॥** तेनापि 'वह्निमान् धूमात्' इत्यत्र अव्याप्तिः परिहृता भवति । तत्र सकलसाध्याभावानां अधिकरणं ह्रदः एव । तस्मिन् धूमो नास्तीति।




**गुणादिरेवेति ॥** साध्याभावः= साध्यप्रतियोगिकः अभावः। 'ह्रदासंयुक्तः नास्ति' इति अभावोऽपि तादृशः। यतः तस्य प्रतियोगी ह्रदासंयुक्तः। तादृशश्च धूमोऽपि भवति। तादृशाभावस्याधिकरणं ह्रदः। परन्तु तत्र कूपासंयुक्तः नास्ति इति अभावः न वर्तते। कूपासंयुक्तस्य मीनादेः ह्रदे सत्वात्। गुणे पुनः कूपासंयुक्तस्य गुणत्वादेः सत्वेऽपि गुणत्वादिकं किमपि संयोगेन गुणे नास्तीति भवति गुणादिकं सकलानां साध्याभावानां अधिकरणम्।



## ।। गादाधरी ।।

'वह्निमत्त्वप्रकारकप्रमाविषयो धूमात्' इत्यादौ साध्यतावच्छेदकीभूतस्वरूप-सम्बन्धावच्छिन्नप्रतियोगिताक-तत्तद्विपक्षावृत्तित्वावच्छिन्नाभावस्य तत्तद्विपक्ष-मात्रवृत्तितया सकलसाध्याभावाधिकरणप्रसिद्ध्या अव्याप्तिश्चेति तदुपेक्ष्य साध्ये साकल्यविशेषणं निवेशितम्।

ननु साध्ये साकल्यविशेषणदानेऽपि 'वह्निमान् धूमात्' इव्यादौ अव्याप्ति-तादवस्थ्यम्। पर्वतादावपि पर्वतीयवह्नेः द्वित्वादिनाऽभावस्य सत्त्वेन सकल-

---

**सकलसाध्याभावाधिकरणाप्रसिद्धिश्चेति ।।** धूमसाध्यके साध्यतावच्छेदक-सम्बन्धः संयोगः। तेन सम्बन्धेन गुणे कस्यापि असत्वात् साध्याभावाधिकरणं गुणः। प्रकृते तु साध्यतावच्छेदकः सम्बन्धः स्वरूपम्। तेन सम्बन्धेन गुणेऽपि ह्रदावृत्ति-गुणत्वप्रकारकप्रमाविशेष्यत्वं अस्तीति सकल-साध्याभावाधिकरणं अप्रसिद्धम्। **तत्तद्विपक्षमात्रवृत्तितयेति ।।**

ह्रदावृत्तिः
स्वरूपसम्बन्धेन नास्ति ⟶ ह्रदः ⟵ कूपावृत्ति ह्रदत्वप्रकारक-प्रमाविषयत्वम्।

कूपावृत्तिः
स्वरूपसम्बन्धेन नास्ति ⟶ कूपः ⟵ समुद्रावृत्तिकूपत्वप्रकारक-प्रमाविषयत्वम्।

समुद्रावृत्तिः
स्वरूपसम्बन्धेन नास्ति ⟶ समुद्रः ⟵ ह्रदावृत्तिसमुद्रत्वप्रकारक-प्रमाविषयत्वम्।

**साध्ये साकल्यविशेषणमिति ।।** प्रकृते सकलं यत् साध्यं = पर्वतीय-महानसीय धूमादिः। तेषां सर्वेषां तत्तद्रूपेण अभावः अयोगोलके अस्तीति नातिव्याप्तिः।

**द्वित्वादिना अभावेति ।।** पर्वते महानसीयवह्न्यादीनां अभावः सुलभः।

॥ गादाधरी ॥

साध्याभावसत्त्वात् व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन अभाव-विशेषणे च 'वह्निधूमोभयवान् वह्नेः' इत्यादौ अतिव्याप्तिः। वह्निमतः तथाविध-सकलसाध्याभावानधिकरणत्वात्। साध्यतावच्छेदकातिरिक्तो यो व्यासज्य-वृत्तिधर्मः तदनवच्छिन्नप्रतियोगिताकत्वनिवेशने च लाघवात् साध्यतावच्छेदका-वच्छिन्न-प्रतियोगिताकत्वमेवाभावे विशेषणमुचितम्, किं साध्ये साकल्य-विशेषणेन इत्यभिप्रेत्य तथैवाह- **साध्यतावच्छेदकेति** ॥

॥ दीधितिः ॥

तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः। न वा नानाव्यक्ति साध्यकसद्धेतावव्याप्तिः ।

॥ गादाधरी ॥

साध्याभाववति साकल्यविशेषणप्रयोजनमाह- **विपक्षेति** ॥ वैकल्पिकयोः साध्यतदभावयोः साकल्य-साध्यतावच्छेदकावच्छिन्न-प्रतियोगिताकत्वविशेष-णयोः व्यावृत्तिमाह- **न वेति** ॥ एकव्यक्तिसाध्यके 'एतद्रूपवान् एतद्रसात्' इत्यादौ हेत्वधिकरणे पूर्वक्षणवृत्तित्वविशिष्टसाध्याभावो न प्रतियोगितावच्छेदकाव-

---

पर्वतीयवह्नेरपि अभावः तत्र वक्तुं शक्यते- 'पर्वतीयवह्नि-घट-उभयं नास्ति' इति। तथा च सकलसाध्यानां अभावः तत्रास्तीति अव्याप्तिः।

**साध्यतावच्छेकातिरिक्तेति** ॥ वह्निधूमोभयसाध्यके उभयत्वरूपः व्यासज्य-वृत्तिधर्मः साध्यतावच्छेदकरूपः इति तदवच्छिन्नत्वं न दोषाय। वह्निसाध्यके पुनः साध्यतावच्छेदकं वह्नित्वम्। अतः उभयत्वरूपः व्यासज्यवृत्तिधर्मः साध्यतावच्छेद-कातिरिक्तः भवति इति तत्र उभयाभावः नैव ग्राह्यः। अतः नाव्याप्तिः इत्यर्थः।

**न प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिन्यधिकरण इति** ॥

| पूर्वक्षणवृत्तित्वविशिष्टैतद्रूपम् | पूर्वक्षणवृत्तित्वविशिष्टैतद्रूपाभावः। |
|---|---|
| पूर्वक्षणे ↓ | ↓ एतत्क्षणे |

एतत् फलम्

च्छिन्नप्रतियोगि-व्यधिकरणः, पूर्वक्षणवृत्तित्वविशिष्ट-एतद्रूपादेः एतद्रसाधिकरणे वृत्तेः। एतद्रूप-तद्रूपोभयत्वावच्छिन्नाभावोऽपि न तथा, प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्धेः इति तत्र लक्षणसङ्गतिरित्यतो **नानाव्यक्तिसाध्यक** इत्युक्तम्। अत एवाव्याप्तिरेवोक्ता नासम्भवः।

अत्र 'नानाव्यक्तिसाध्यकत्वम्' व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदककत्वम्। अत एव 'एतद्व्यक्तिवृत्तियावद्धर्मवान् एतत्त्वात्' इत्यादौ नानाव्यक्तिसाध्यकेऽव्याप्तिविरहेऽपि न क्षतिः।

---

**अधिकरणाप्रसिद्धेरिति ॥**




**व्यधिकरणेति ॥** विभिन्नाधिकरणद्वयवृत्तीत्यर्थः।




अतः 'वह्निमान् धूमात्' इत्यत्र धूमरूपः हेतुः नानाव्यक्तिसाध्यकः। नैवं 'एतद्वृत्तियावद्धर्मवान् एतत्वात्' इत्यत्र एतत्वरूपः हेतुः। तत्र साध्यघटकानां धर्माणां एकाधिकरणकत्वात्।

## ॥ दीधितिः ॥

अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतौ अव्याप्तेः, व्यभिचारिणि च अव्याप्यवृत्तौ अतिव्याप्तेर्वारणाय अभावद्वये प्रतियोगिवैयधिकरण्यं बोध्यम् ।

## ॥ गादाधरी ॥

**अव्याप्यवृत्तीति ॥** 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यादावित्यर्थः । 'अव्याप्तेर्वारणाय' इत्यन्वयः । **व्यभिचारिणि चेति ॥** 'एतद्वृक्षत्ववान् कपिसंयोगात्' इत्यादौ इत्यर्थः । **अभावद्वये-** साध्याभावे हेत्वभावे च ।

तथा च अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतौ अव्याप्तिवारणाय साध्याभावे, व्यभिचारिणि चाव्याप्यवृत्तौ अतिव्याप्तेर्वारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यमित्यर्थः ।

यद्यपि हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणस्यावश्यकतया 'कपिसंयोगी कपिविभागात्' इत्यादौ अव्याप्यवृत्तिहेतुके अव्याप्तिवारणप्रयोजनकत्वं




अतः अत्र साध्यं समानाधिकरणद्वयम् । न तु व्यधिकरणद्वयम् । अतः साध्यस्य नानात्वेऽपि अयं हेतुः नानाव्यक्तिसाध्यकः न भवति ।

**कपिसंयोगी कपिविभागादिति ॥** कपिसंयोगाभाववति तद्वृक्षे, अव्याप्यवृत्तित्वेन, कपिविभागस्याभावोऽपि अस्ति । अतः नात्र अव्याप्तिसम्भवः । तथापि सः विभागाभावः न प्रतियोगिव्यधिकरणः । तद्वृक्षे कपिविभागस्यापि सत्वात् । अतः सम्भवत्येव अव्याप्तिः । तस्मात् मूले, हेतौ व्याप्यवृत्तीति विशेषणं यद्यपि व्यर्थम् । तथापि हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणं नेदानीं दत्तम् । किन्तु उत्तरत्र दास्यति । तत्प्रतिसन्धाने सत्येव अत्र अव्याप्तिः वक्तुं शक्यते । व्याप्यवृत्तिहेतौ अव्याप्तिस्तु विनैव तत्प्रतिसन्धानं सम्भवतीति अभिप्रेत्य मूलकारेण व्याप्यवृत्तीति विशेषणं दत्तम् । तस्मात् न तद्विशेषणम् असङ्गतम् । एतदुक्तम्=व्याप्यवृत्तीत्युक्तम् ।

## ॥ गादाधरी ॥

साध्याभावे तद्विशेषणस्य सम्भवतीति व्याप्यवृत्तीत्यकिञ्चित्करम् । तथापि हेत्वभावे तद्विशेषणप्रतिसन्धानं विनैव व्याप्यवृत्तिहेतुकस्थलेऽव्याप्तिनिर्णयो भवतीत्येतदभिसन्धाय एव तदुक्तम् ।

प्रतियोगिवैयधिकरण्यश्च न प्रतियोग्यधिकरणावृत्तित्वम्, अव्याप्यवृत्तिसाध्यके तथाविधहेतुके च तादृशसाध्याभावहेत्वभावाप्रसिद्ध्या अव्याप्तेः । अपि तु प्रतियोग्यनधिकरणवृत्तित्वम् ।

---

**प्रतियोगिवैयधिकरण्यं चेति ॥**

प्रतियोगिव्यधिकरणः साध्याभावः } १.प्रतियोगिनः यत् अधिकरणं तदवृत्तिः साध्याभावः
२.प्रतियोगिनः अनधिकरणं यत् तद्वृत्तिः साध्याभावः

प्रथमे तादृशः कपिसंयोगाभावः अप्रसिद्धः -




अभावस्य एकत्वात् वृक्षे विद्यमान एव अभावः गुणेऽपि अस्ति । अतः प्रतियोग्यधिकरणवृत्तिरेव सः ।

अतः द्वितीयः अर्थः ग्राह्यः -




अथापि प्रतियोग्यनधिकरण-गुण-वृत्तिरेव अभावः वृक्षेऽपि अस्तीति पुनः अव्याप्तिः । अतः प्रतियोग्यनधिकरणवृत्तित्व-विशिष्टेति । 'तद्धर्मि-वृत्तित्वविशिष्ट-निरूपिताधिकरणता तद्धर्मिनियता' इति नियमः । तद्धर्मी= प्रतियोग्यनधिकरणीभूत-गुणादिः । तद्वृत्तित्वविशिष्टः कपिसंयोगाभावः । तन्निरूपिता अधिकरणता गुणे एव, न तु वृक्षे ।

## ॥ गादाधरी ॥

तथा च प्रतियोग्यनधिकरणवृत्तित्वविशिष्ट-साध्याभावाधिकरणेषु यावत्सु प्रतियोग्यनधिकरणवृत्तित्वविशिष्टः सन् वर्तते योऽभावः तत्प्रतियोगित्वमर्थः।

तेन 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यादौ कपिसंयोगाद्यनधिकरणगुणादि-वृत्तित्वोपलक्षितकपिसंयोगाद्यभावस्य हेत्वधिकरणे सत्त्वेऽपि नाव्याप्तिः। न वा 'एतद्वृक्षत्ववान् कपिसंयोगात्' इत्यादौ तथाविधकपिसंयोगाद्यभावस्य सकल-साध्याभावाधिकरणे सत्त्वेऽप्यतिव्याप्तिः।

प्रतियोग्यनधिकरणीभूत-साध्याभावाधिकरण-यावन्निष्ठस्वप्रतियोग्यनधि-करणताकाभावप्रतियोगित्वमिति फलितोऽर्थः। प्रथमे साध्यतावच्छेदकसम्बन्धेन चरमे हेतुतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यम्। तेन 'अयमा-त्माऽऽत्ममहाकालान्यतरत्वात्' इत्यादौ व्यभिचारनिरूपकाधिकरणस्य कालस्य कालिकसम्बन्धेन आत्मत्वाधिकरणत्वेऽपि नातिव्याप्तिः।

---

प्रतियोग्यनधिकरणवृत्तित्वविशिष्टसाध्याभावस्य अधिकरणं तदेव भवति यत् प्रतियोगिनः अनधिकरणं भवति। अतः लाघवात् तथैवाह- **प्रतियोग्यनधिकरणी-भूतेति** ॥

**प्रथमे इत्यादि** ॥ साध्यतावच्छेदकसम्बन्धनिवेशप्रयोजनम्- 'अयमात्मा' इत्यत्रा-तिव्याप्तिपरिहारः। हेतुतावच्छेदकसम्बन्धनिवेशप्रयोजनं 'वह्निमान् धूमात्' इत्यत्रा-व्याप्तिपरिहारः। प्रथमे आत्मत्वं साध्यम्। आत्ममहाकालान्यतरत्वं हेतुः। स च दुष्टः-




जन्यमात्रस्य कालोपाधित्वानङ्गीकारे 'धूमवान् वह्नेः' इत्यत्र नातिव्याप्तिः। अयोगोलके कालिकेन धूमस्याभावात्। अतः यत्र काल एव व्यभिचारनिरूपकं अधिकरणं तत्रातिव्याप्तिरुक्ता।

## ॥ गादाधरी ॥

न वा 'वह्निमान् धूमात्' इत्यादौ साध्याभावाधिकरणयावदन्तर्गतकालज्ञानादिषु कालिकविषयित्वादिसम्बन्धेन हेत्वभावप्रतियोग्यधिकरणतासत्त्वेऽपि असम्भवोऽव्याप्तिर्वा ।

---

**असम्भवः अव्याप्तिर्वेति**॥ 'मनः आत्मभिन्नं ज्ञानवदन्यत्वात्' इत्यनुमानम्। अत्र साध्याभाववान् आत्मा। तत्र हेत्वभावः = ज्ञानवदन्यत्वाभावः = ज्ञानवत्वम्। साध्याभावाधिकरणे आत्मनि केनापि सम्बन्धेन प्रतियोगिभूतं ज्ञानवदन्यत्वं नास्ति। अतः लक्षणसमन्वयात् नासम्भवः। तत्रापि ज्ञानवदन्यत्वं एकज्ञानविषयत्वसम्बन्धेन अस्ति। अतः हेत्वभावः न प्रतियोगिव्यधिकरणः इति लक्षणं समन्वेतुं न शक्यते। तथा च असम्भवः। इत्थं च एकज्ञानविषयत्वस्य सम्बन्धत्वे असम्भवः। सम्बन्धत्वास्वीकारे अव्याप्तिः। एकज्ञानविषयत्वम्= स्वविषयकज्ञानविषयत्वम्-




एकज्ञानविषयत्वस्य सम्बन्धत्वे आत्मभेदसाध्यकेऽपि लक्षणं न सङ्गच्छते। अतः असम्भवः-




एकज्ञानविषयत्वस्य सम्बन्धत्वानङ्गीकारे आत्मभेदसाध्यके लक्षणगमनात् नासम्भवः-



## ।। गादाधरी ।।

इत्थञ्च प्रतियोगित्वे सम्बन्धविशेषावच्छिन्नत्वेन न निवेशनीये। सम्बन्धान्तरावच्छिन्नप्रतियोगिताकयोः साध्याभावहेत्वभावयोः उक्तसम्बन्धेन प्रतियोगिसमानाधिकरणतया असम्भवातिव्याप्त्योः अनवकाशात्।

---

**इत्थं चेति ।।** प्रतियोगिवैयधिकरण्यशरीरे उभयत्र क्रमेण साध्यतावच्छेदक- हेतुतावच्छेदकसम्बन्धयोः निवेशे च इत्यर्थः । यदि प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यं साध्याभावे निवेश्यते तर्हि असम्भवः । 'वह्निमान् धूमात्' इत्यत्र समवायेन वह्न्यभावः पर्वते अस्ति। स च प्रतियोगितावच्छेदकीभूत-समवायसम्बन्धेन प्रतियोगिव्यधिकरणश्च इति। तत्परिहाराय अभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेश्यम्। तथा च उभयत्र सम्बन्धनिवेशेन गौरवम्। साध्यतावच्छेदकसम्बन्धेन प्रतियोगि वैयधिकरण्यनिवेशे च समवायेन वह्न्यभावः यत्रास्ति पर्वते तत्र साध्यतावच्छेदकीभूतसंयोगेन वह्नेः सत्वात् नासम्भवावकाशः, लाघवश्च-

१. प्रतियोगिनः अनधिकरणं यत् साध्यनिष्ठप्रतियोगिताकाभावाधिकरणम्.... ।

प्रतियोगितावच्छेदकसम्बन्धेन साध्यतावच्छेदकसम्बन्धावच्छिन्ना ।

२. प्रतियोगिनः अनधिकरणं यत् साध्यनिष्ठप्रतियोगिताकाभावाधिकरणम्....।

साध्यतावच्छेदकसम्बन्धेन (—) (लाघवम्)

एवं, यदि हेत्वभावे प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यं निवेश्येत तर्हि 'वह्निमान् समवायेन धूमात्' इत्यत्रातिव्याप्तिः। साध्याभाववति धूमावयवे संयोगेन धूमाभावस्य, प्रतियोगिव्यधिकरणस्य सत्वात्। प्रतियोगिवैयधिकरण्यशरीरे हेतुतावच्छेदकसम्बन्धनिवेशे पुनः संयोगेन वह्न्यभाववति धूमावयवे समवायेन धूमस्य सत्वात् नातिव्याप्त्यवकाशः।

## ॥ दीधितिः ॥

हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः बोध्यः। तत्प्रतियोगित्वञ्च हेतुतावच्छेदकरूपेण बोध्यम्। तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाव्याप्तिः। न वा विशिष्टसत्तात्वादिना तादृशाभावप्रतियोगिनि सत्तादावतिप्रसङ्गः।

## ॥ गादाधरी ॥

**हेत्वभावोऽपीति ॥** अपिशब्देन साध्याभावेऽपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं निवेशनीयमिति सूच्यते। तेन विशिष्टसत्तावान् जातेरित्यादौ हेत्वधिकरणगुणादिषु साध्याभावप्रतियोगिनः सत्त्वादेः सत्त्वेऽपि नातिव्याप्तिः।

अत्र 'साध्याभावोऽपि' इत्युक्तौ अग्रिमतत्पदेन हेत्वभावपरामर्शासम्भवः। तत्र हेत्वभावपदोपादाने चाऽक्षराधिक्यमिति तन्नोक्तम्। 'तत्प्रतियोगित्वम्' साध्याभाववन्निष्ठाभावप्रतियोगित्वम्, 'हेतुतावच्छेदकरूपेण' हेतुतावच्छेदकावच्छिन्नमित्यर्थः।

हेत्वभावनिष्ठप्रतियोगिवैयधिकरण्यशरीरे स्वप्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशस्य प्रयोजनमाह- **द्रव्यत्वादाविति ॥ विशिष्टसत्तेति ॥** गुणकर्मान्यत्वविशिष्टसत्तेत्यर्थः। प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशनस्य फलमाह- **न वेति ॥** अत्रापि 'द्रव्यत्वादौ साध्ये' इत्यनुषज्यते।

---

**अग्रिमतत्पदेनेति ॥** दीधितौ 'तत्प्रतियोगित्वं च' इत्युत्तरग्रन्थे तत्पदेन इत्यर्थः। **हेत्वभावपदोपादाने इति ॥** तत् पदं परित्यज्य 'हेत्वभावप्रतियोगित्वं च' इत्युक्तौ इत्यर्थः।

**अनुषज्यत इति ॥** तथा च 'द्रव्यं सत्वात्' इत्यनुमानम्। अत्र द्रव्यत्वाभाववन्निष्ठाभावः विशिष्टसत्ताभावः। तस्य प्रतियोगिनी भवति शुद्धसत्ता। अतः अतिव्याप्तिः। तत्परिहाराय हेत्वभावीय-प्रतियोगितायां हेतुतावच्छेदक-धर्मावच्छिन्नत्वं देयम्। प्रकृते तादृशो धर्मः सत्तात्वम्। गृहीताभावीया प्रतियोगिता च विशिष्टसत्तात्वावच्छिन्ना। अतः नातिव्याप्तिः।

## ॥ गादाधरी ॥

'विशिष्टसत्तात्वादिना' गुणकर्मान्यत्वविशिष्टसत्तात्वादिना। तृतीयार्थश्च अत्रावच्छिन्नप्रतियोगिताकत्वम्। तस्याभावेऽन्वयः। प्रतियोगिपदार्थैकदेश-प्रतियोगित्वान्वितम् अवच्छिन्नत्वं वा तदर्थः। **तादृशाभावेति** ॥ सकलसाध्या-भाववन्निष्ठाभावेत्यर्थः।

न च हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यस्थले हेतुता-वच्छेदकावच्छिन्नवैयधिकरण्यमेव निवेश्यताम्। ततोऽपि तत्प्रयोजननिर्वा-हात्। तथा च 'द्रव्यं सत्त्वात्' इत्यादौ गुणादिनिष्ठविशिष्टसत्ताभावस्य हेतुता-

---

ननु 'द्रव्यं विशिष्टसत्वात्' इत्यत्र अव्याप्तेः परिहारार्थं प्रतियोगितावच्छेद-कावच्छिन्न-वैयधिकरण्यं निविष्टम्। ततः पुनः 'द्रव्यं सत्वात्' इत्यत्र अतिव्याप्ति-परिहारार्थं च प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वं निविष्टम्। एतदपेक्षया हेत्वभावे हेतुतावच्छेदकावच्छिन्न-वैयधिकरण्यमेव निवेश्यताम्। तेन अव्याप्तिः अतिव्याप्तिश्च परिहृता भवति इति शङ्कते- **न चेति** ॥

१. 'द्रव्यं विशिष्टसत्वात्' -




अतः नाव्याप्तिसम्भवः।

२. 'द्रव्यं सत्वात्'




अतः नातिव्याप्तिः।

## ।। गादाधरी ।।

वच्छेदकावच्छिन्नसमानाधिकरणतयैव अतिव्याप्तिवारणसम्भवात् प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशनमफलमिति वाच्यम्।

हेत्वभावे हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे 'सकलसाध्याभावनिष्ठा या हेतुतावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टनिरूपिताधिकरणता तन्निरूपकाभावप्रतियोगित्वमर्थः' स्यात्। तदपेक्षया सकलसाध्याभावनिष्ठा या हेतुतावच्छेदकावच्छिन्नयादृशप्रतियोगितावच्छेदकावच्छिन्न-अनधिकरणता तद्वत्त्वरूपस्य अस्मदीयफलितार्थस्य अगुरुत्वात्।

---

**हेतुतावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टेति ।।** 'वह्निमान् धूमात्' इत्यत्र हेतुतावच्छेदकं= धूमत्वं, तदवच्छिन्नानधिकरणं= ह्रदः। तद्वृत्तित्वविशिष्टः= धूमाभावः। तन्निरूपिता अधिकरणता ह्रदनिष्ठा। तादृशाधिकरणताकाभावः धूमाभावः तत्प्रतियोगित्वं धूमे। यथा -



वह्निसाध्यकानुमाने समन्वयः-




**तदपेक्षयेति ।।** व्याप्तेः प्रतियोगिता पर्यवसायित्वेन 'प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यम्' इत्यत्र यत्पदेन प्रतियोगिताग्रहणे हेत्वभावं अनिवेश्यैव 'तादृशप्रतियोगित्वं व्याप्तिः' इति वक्तुं शक्यत्वेन अस्मिन् पक्षे लघु भवति व्याप्तिस्वरूपम् । तद्यथा-



### ॥ गादाधरी ॥

न च ममापि सकलसाध्याभाववन्निष्ठं यद्धर्मावच्छिन्नानधिकरणत्वं तद्धर्मवत्त्वमित्येवार्थः । स चातिलघुरेवेति वाच्यम्, एतादृशार्थकरणे मूलोक्तं प्रतियोगिताया व्याप्तित्वं व्याहन्येतेति मूलानुसारेण दीधितिकृता गुर्वर्थानुसरणात् ।

---

वह्निसाध्यकहेतौ समन्वयः -




**नचेति ॥** हेत्वभावं अनिवेश्यैव यदि लक्षणं परिष्क्रियते तर्हि प्रतियोगित्वमपि परित्यज्य साध्याभावाधिकरणे हेतुतावच्छेदकावच्छिन्न-अनधिकरणत्वमेव निवेश्यताम् । तदा तादृशहेतुतावच्छेदकवत्त्वं व्याप्तिर्भवति । तथा च अतिलाघवम् इति आक्षेप्तुः अभिप्रायः । यथा-






## ॥ गादाधरी ॥

उक्तविशेष्यविशेषणभावेन निवेशे व्यर्थविशेषणतानवकाशात्।

केचित्तु हेतुतावच्छेदकावच्छिन्न-वैयधिकरण्यनिवेशे सकलसाध्याभाववन्निष्ठ-विशिष्टसत्तात्वावच्छिन्न-व्यधिकरणाभावप्रतियोगित्वरूप-व्याप्ति-विशिष्ट-वैशिष्ट्यज्ञानस्य गुणेऽपि सत्त्वाद् बाधानवतारदशायां तत्र द्रव्यत्वानुमित्यापत्तिः।

---

**उक्तविशेष्येत्यादि ॥** 'यादृशप्रतियोगितावच्छेदकावच्छिन्न-अनधिकरणत्वं सकलसाध्याभाववन्निष्ठम्' इत्यादि विशेष्य-विशेषणभावविशिष्टेत्यर्थः। **व्यर्थविशेषणतेति ॥** प्रतियोगिता पर्यवसित व्याप्तौ किमपि विशेषणं न व्यर्थम्। यद्यपि तदपेक्षया हेतुतावच्छेदकधर्मपर्यवसितं व्याप्तिस्वरूपं लघु भवति। न तावता प्रतियोगित्वपर्यवसितायाः व्याप्तेः व्याप्तित्वत्वं विहन्यते। लक्षणस्य लक्षणान्तरादूषकत्वात्।

**केचित्तु इति ॥** द्रव्यत्वव्याप्तिः नाम- द्रव्यत्वाभाववन्निष्ठ-हेतुतावच्छेदकावच्छिन्न-व्यधिकरणाभावप्रतियोगित्वम्। तद्यथा विशिष्टसत्तायां अस्ति तथा शुद्धसत्तायामपि। यतो हि द्रव्यत्वाभाववन्निष्ठाभावो नाम विशिष्टसत्ताभावः। तस्य च प्रतियोगिनी शुद्धसत्तापि। तथा च 'द्रव्यत्वव्याप्य-सत्तावान् गुणः' इति परामर्शः प्रमात्मकः। तेन 'गुणः द्रव्यम्' इत्यनुमित्यापत्तिः। न चेष्टापत्तिः। प्रमात्मकपरामर्शस्य भ्रमात्मकानुमित्यजनकत्वात्। अतः न प्रतियोगित्वमात्रं व्याप्तिः। किन्तु प्रतियोगितावच्छेदकं यत् हेतुतावच्छेदकं तदेव पर्यवसितं व्याप्तिस्वरूपम्। तादृश-व्याप्तिविशिष्ट-वैशिष्ट्यावगाहिज्ञानमेव अनुमितिहेतुः। प्रकृते च हेतुतावच्छेदकं विशिष्टसत्तात्वम्। न च 'द्रव्यत्वव्याप्य-विशिष्टसत्तावान् गुणः' इति परामर्शः प्रमात्मकः। तस्मात् नोक्तदोषः।

प्रमात्मकपरामर्शः -



## ॥ गादाधरी ॥

अस्मन्मते तु 'तत्प्रतियोगित्वञ्च' इत्यतो लब्धस्य तादृशप्रतियोगितावच्छेदकहेतुतावच्छेदकस्य व्याप्तितया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानस्य गुणेऽपि भ्रमत्वादित्याहुः।

---

भ्रमात्मकपरामर्शः -




'केचित्तु' इत्यनेन अस्वरसः सूचितः। किं गुणे विशिष्टसत्ताहेतुका अनुमितिः आपाद्यते अथ शुद्धसत्ताहेतुका? नाद्यः, 'व्याप्तिविशिष्ट-हेतुतावच्छेदकावच्छिन्नहेतुमान् पक्षः' इति परामर्शस्यैव तादृशानुमितिकारणतया गुणे तस्य भ्रमत्वात्। न द्वितीयः। तादृशसाध्याभावाधिकरणे गुणे योऽभावः = विशिष्टसत्ताभावः तस्य हेतुतावच्छेदकावच्छिन्नव्यधिकरणत्वाभावात्। हेतुतावच्छेदकावच्छिन्नशुद्धसत्तायाः हेत्वभावाधिकरणे गुणे सत्वात्। अतः द्रव्यत्वव्याप्तिरेव सत्तायां नास्ति।

०-०-०

## ॥ दीधितिः ॥

*चतुर्थलक्षणस्य दोषकथनम्*

यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र, निर्धूमत्वादिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिः । तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्-विपक्षावृत्तित्वात् । अत आह- **साध्यवदन्येति** ॥

## ॥ गादाधरी ॥

एतल्लक्षणं दूषयित्वोत्तरलक्षणमवतारयति- **यत्रैकव्यक्तिकमिति** ॥ यत्रैक-व्यक्तिकं साध्यं तत्राव्याप्तिरित्यन्वयः । 'एतद्रूपवान् एतद्रसात्' इत्यादौ अनेकाशेषत्वरूपसाकल्यस्य साध्येऽसत्त्वादिति भावः । साध्ये साकल्यविशेषणं परित्यज्य कल्पान्तरानुसरणान्न तत्र एतद्दोषावकाश इत्यत आह- **विपक्षो वेति** ॥ 'विपक्षः' साध्याभाववान् । अत्राप्येकव्यक्तिक इत्यस्य विशेषणस्य लिङ्गव्यत्ययेनानुषङ्गः । तथा च 'एतद्घटभिन्नं पटत्वात्' इत्यादौ साध्याभाववति एतद्घटादौ साकल्याप्रसिद्ध्याऽव्याप्तिरित्यर्थः । सकलपदस्याशेषमात्रपरत्वे दोषान्तरमाह- **निर्धूमत्वादिव्याप्य इति** ॥ 'तत्त्वेन' निर्धूमत्वव्याप्यत्वेन । तथा च 'धूमत्वावच्छिन्नाभावव्याप्यवान् वह्नित्वावच्छिन्नाभावात्' इत्यादौ इत्यर्थः। धूमत्वाद्यवच्छिन्नाभावे साध्ये एकव्यक्तिकतया पूर्वदोषाक्रान्तत्वेन तद्व्याप्य-साध्यकानुसरणम् ।

---

**अशेषमात्रपरत्वे इति** ॥ अशेषत्वं= समभिव्याहृतपदार्थतावच्छेदकधर्म-व्यापकत्वम् । सकलसाध्याभाववन्निष्ठाभावेत्यत्र लक्षणवाक्ये सकलपदसमभिव्याहृतं पदं= साध्याभाववत् पदम् । तत्पदार्थतावच्छेदकं= साध्याभाववत्वं= साध्याभावः । एवं च 'साध्याभाव-व्यापकीभूत-अभावप्रतियोगित्वम्' इति लक्षणवाक्यार्थः । 'एतद्घटभिन्नं पटत्वात्' इत्यत्र च साध्याभावः= एतद्घटभेदाभावः । तद्व्यापकः भवति पटत्वाभावः। अतः न तत्राव्याप्त्यवकाशः इत्यर्थः ।

## ॥ गादाधरी ॥

निर्धूमत्वव्याप्यजलत्वादेः ताद्रूप्येण साध्यतायां सद्धेतुत्वानुपपत्तिः। अतः तत्त्वेनेत्युक्तम्। **हेत्वभावस्येति** ॥ अथ वह्न्यात्मकहेत्वभावस्य प्रत्येकं सकलसाध्याभाववन्निष्ठत्वासम्भवेऽपि सकलतन्निष्ठवह्न्यभावादिभेद-प्रतियोगितामादायैव लक्षणं सङ्गमनीयम्। हेतुतावच्छेदकसम्बन्धेन

---

**ताद्रूप्येणेति** ॥ ह्रदत्वत्वेनेत्यर्थः। तथा च 'ह्रदत्ववान् वह्न्यभावात्' इत्यनुमानं व्यभिचरितम्। वह्न्यभाववति कूपे ह्रदत्वाभावात्। व्याप्यत्वेन साध्यतायां च नायं दोषः। कूपे ह्रदत्वाभावेऽपि निर्धूमत्वव्याप्यस्य कूपत्वस्य सत्वात्।

अत्रेदं तत्त्वम्। द्रव्यसाध्यकम् अनुमानं 'वह्निमान् धूमात्' इत्यपि भवति। द्रव्य-त्वेन द्रव्यसाध्यकं तु 'द्रव्यवान्' इत्येव। तद्वत्- धूमाभावव्याप्यसाध्यकम् अनुमानम् इत्येवोक्तौ 'ह्रदत्ववान्' इत्यादिरपि भवति। व्याप्यत्वेन व्याप्यसाध्यकम् इत्युक्तौ तु 'धूमाभावव्याप्यवान्' इत्येव अनुमानस्वरूपं भवति।

अत्र धूमाभावव्याप्यं ह्रदत्वं मीनशैवालादिकं च भवति। परन्तु तेषां साध्यत्वे साध्यतावच्छेदकसम्बन्धः समवायः संयोगो वा भवति। तथासति हेतुमति सामान्यादौ व्याभिचारः। तत्र तेन सम्बन्धेन कस्यापि असत्त्वात्। अतः ह्रदत्वादिप्रकारकप्रमा-विशेष्यत्वादिकमेव निर्धूमत्वव्याप्यपदेन ग्राह्यम्। तथासति साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धो भवतीति न दोषः।

तथा च चतुर्थलक्षणस्य 'ह्रदः धूमाभावव्याप्यवान् वह्न्यभावात्' इत्यत्र अव्याप्तिः- अत्र साध्यं = धूमाभावव्याप्यं (ह्रदत्वादिप्रकारकप्रमाविशेष्यत्वम्) साध्याभावः = धूमाभावव्याप्याभावः। साध्याभावाधिकरणं = पर्वतः, महानसः, चत्वरश्च। हेत्वभावः = पर्वतीयवह्निः, महानसीयवह्निः, चत्वरीयवह्निश्च। नचैकोऽपि वह्निः साध्याभावाधिकरणेषु यावत्सु वर्तते। अतः अव्याप्तिः इत्यर्थः।

**वह्न्यभावभेद इति** ॥ एकधर्मावच्छिन्नप्रतियोगिताकः भेद एक एव। अतः सः सर्वविपक्षानुगतः हेत्वभावः।

## ।। गादाधरी ।।

प्रतियोगिवैयधिकरण्यनिवेशादेव व्यभिचारिणि सम्बन्धान्तरावच्छिन्नप्रतियोगिताकहेत्वभावमादाय अतिप्रसङ्गानवकाशेन हेत्वभावप्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशात्।

यत्तु वह्निमद्भेदहेतुताभिप्रायकोऽयं ग्रन्थः, भेदभेदस्य अनवस्थाभयेन अधिकरणस्वरूपतया तस्य च प्रत्येकं विश्रान्ततया यावद्विपक्षवृत्तित्वासम्भवात् तत्र हेतुभेदमादायापि लक्षणगमनासम्भवादिति।

---

ततश्च हेतुः= वह्न्यभावः । हेत्वभावः = हेतुप्रतियोगिकः अन्योन्याभावः= वह्न्यभावभेदः।

| | | |
|---|---|---|
| | पर्वतः | |
| | महानसः | |
| साध्याभावाधिकरणम् | चत्वरः | वह्न्यभावभेदः |
| | — | |
| | — | |

**अनवकाशेनेति** ।। गदाधरेण प्रतियोगिवैयधिकरण्यं हेतुतावच्छेदकसम्बन्धेन इत्युक्तम्। अतः तन्मते हेत्वभावीयप्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वं न निविष्टमिति हेतुभेदोऽपि लक्षणघटकः । जगदीशेन पुनः प्रतियोगिवैयधिकरण्यं प्रतियोगितावच्छेदकसम्बन्धेन, प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना इत्युक्तम् । अतः तन्मते न हेतुभेदमादाय लक्षणसङ्गमनं सम्भवति । गदाधरभट्टाचार्यस्यापि अन्तिमः परिहारः अयमेव।

**यत्तु इति** ।। वह्न्यभाव-वह्निमद्भेदयोः समनियतत्वेन तस्यापि हेतुत्वं युज्यते। अत्र हेतोः अत्यन्ताभावः वह्निस्वरूपः। हेतुभेदश्च तत्तदधिकरणस्वरूपः। तस्मात् अव्याप्तिः वज्रलेपायिता इत्याशयः।

## ॥ गादाधरी ॥

तन्न । आकाशाभावाद्यधिकरणकभेदभेदस्य आकाशाभावाद्यधिकरण-स्वरूपतया तस्य च यावद्विपक्षवृत्तित्वेन तमादायैव लक्षणगमनसम्भवात्।

न चैतादृशरीत्या आकाशाभावमादाय भेदहेतुकव्यभिचारिणि अतिप्रसक्त्या

---

**तन्नेति ॥** 'आकाशाभावः वह्निमद्भेदो न' इत्ययं भेदः भेदप्रतियोगिकः भेदः। तस्य च अधिकरणम् आकाशाभावः। अतः सः आकाशाभावस्वरूपः। तथा च प्रकृते हेत्वभावः आकाशाभावरूपः। स च सर्वविपक्षवृत्तिः इति नाव्याप्तिः।

हेतुः = वह्निमद्भेदः।

हेत्वभावः = वह्निमद्भेदस्य भेदः



∴ वह्निमद्भेद-भेदः = आकाशाभावः

**भेदहेतुकव्यभिचारिणीति ॥** 'पटः गुणवान् घटभेदात्' इत्यनुमानम्। अत्र व्यभिचारः दोषः -

साध्यं=




**अतिप्रसक्त्येति ॥** अत्रापि हेत्वभावः = हेतुभेदः = घटभेदभेदः आकाशाभावरूपः।

घटभेदः

न



घटभेद-भेदः = आकाशाभावः

आकाशाभावश्च गुणेऽपि अस्तीति अतिव्याप्तिः।

## ॥ गादाधरी ॥

हेत्वभावत्वेन सकलसाध्याभावाधिकरणवृत्तित्वं विवक्षणीयम्। तथासति अधिकरणस्वरूपाभावस्य स्वस्मिन्नेव तदभावत्वेन वृत्तिरिति नातिव्याप्त्यवकाशः। एवञ्चाकाशाभावम् आदाय नोक्ताव्याप्तिपरिहारसम्भव इति वाच्यम्।

उक्तस्थल आकाशाभावस्य हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यविरहादेव अतिव्याप्तिवारणसम्भवेन तादृशविवक्षाया निष्प्रयोजनकत्वात्। वह्निमद्भेदहेतुकस्थले च साध्याभावाधिकरणस्य हेतुरूपप्रतियोग्यनधिकरणत्वेन आकाशाभावरूपहेतुभेदस्य प्रतियोगिव्यधिकरणत्वेन अव्याप्तिवारणसम्भवादिति चेत्।

---

**हेत्वभावत्वेनेति ॥** प्रकृते हेतुः = घटभेदः, हेत्वभावः = घटभेदभेदः। हेत्वभावत्वम् = घटभेद-भेदत्वम्। **स्वस्मिन्नेवेति ॥** तत्तदधिकरणे एवेत्यर्थः। घटभेद-भेदः भेदभेदत्वेन आकाशाभावे अस्ति, गुणादौ च अस्ति। परन्तु सः अननुगतः तत्तदधिकरणस्वरूपत्वात्। अतो नातिव्याप्तिः। आकाशाभावस्तु अनुगतः। परं सः घटभेदभेदत्वेन न अनुगतः, किन्तु आकाशाभावत्वेनैव। तस्मात् तमादायापि नातिव्याप्तिः। एवं वह्निमद्भेदसाध्यकेऽपि।

**प्रतियोगिवैयधिकरण्यविरहादेवेति ॥** 'गुणवान् घटभेदात्' इत्यत्र यद्यपि आकाशाभावरूपः हेत्वभावः सर्वविपक्षवृत्तिः। अथापि नातिव्याप्तिः। तस्य प्रतियोगिसमानाधिकरणत्वात् -




इत्थं च उक्तप्रतियोगिवैयधिकरण्यविशेषणेनैव तत्परिहारात् नातिव्याप्तिः। प्रकृते वह्निमद्भेदहेतुके च आकाशाभावरूपः हेत्वभावः प्रतियोगिव्यधिकरणः -



## ॥ गादाधरी ॥

अत्र केचित्, यत्र वह्न्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यं साध्यं वह्न्यभावान्यत्वविशिष्ट-वह्न्यभावो हेतुः तत्र वह्न्यभावस्यापि सकलसाध्याभाववदन्तर्गततया तत्र वह्न्यभावभेदासत्त्वेन तमादाय लक्षणगमनासम्भवात्।

---

**अत्र केचिदिति ॥** हेतुः = वह्न्यभावान्यत्वं + वह्न्यभावः ।

सामानाधिकरण्यं सं.

ह्रदे अयं हेतुः अस्ति -




साध्यम् = वह्न्यभावान्यत्वं + निर्धूमत्वव्याप्यम् ।

सामानाधिकरण्यं सं.

ह्रदे इदं साध्यं चास्ति-




पर्वते साध्यं नास्ति-



## ॥ गादाधरी ॥

न च तादृशविशिष्टहेतुकस्थले हेतुभेदस्य सकलसाध्याभाववन्निष्ठत्वासम्भवेऽपि अखण्डविशिष्टात्यन्ताभावस्य तथात्वमादायैव लक्षणं सङ्गमनीयमिति वाच्यम्।

प्राचीनमते विशिष्टाभावस्य विशेषणाभाव-विशेष्याभावाभ्याम् अनतिरिक्ततया तादृशविशिष्टाभावस्य वह्न्यभावत्व-वह्न्युभयरूपत्वेन सकलसाध्याभाववन्निष्ठत्वासम्भवात्।

---

वह्न्यभावेऽपि साध्यं नास्ति-




वह्न्यभावस्य विपक्षत्वसम्पादनार्थमेव साध्ये वह्न्यभावान्यत्वं विशेषणं निवेशितम्। यदि साध्यशरीरमात्रे तद्विशेषणं उपादीयते तर्हि वह्न्यभावे एव व्यभिचारः स्यात्। अतः हेतावपि तद्विशेषणप्रक्षेपः।

**अनतिरिक्तत्वेनेति** ॥ यथा-

दण्ड + पुरुषस्य अभावः = दण्डाभाव (वा) पुरुषाभावः।

संयोग

प्रकृते साध्याभावः -

१   २   १   २

वह्न्यभावान्यत्व + वह्न्यभावस्य अभावः = वह्न्यभावत्व (वा) वह्निः

सामानाधिकरण्यं सम्बन्धः

## ॥ गादाधरी ॥

अथैवमपि विषयितादिसम्बन्धावच्छिन्नप्रतियोगिताकस्य वह्न्यभावात्यन्ताभावस्य अखण्डतया सकलधूमवन्निष्ठतया तमादायैव लक्षणं सङ्गमनीयमिति चेन्न, वृत्त्यनियामकतया विषयितादिसम्बन्धानाम् अत्यन्ताभावप्रतियोगितानवच्छेदकत्वात् ।

---

विशेषणम्= वह्न्यभावान्यत्वम् । विशेषणाभावः=वह्न्यभावत्वाभावः= वह्न्यभावभेदाभावः= वह्न्यभावत्वम् । भेदाभावस्य भेदप्रतियोगितावच्छेदकरूपत्वात् ।

एवं च सकलविपक्षेषु नास्ति एकः हेत्वभावः -




**अखण्डतयेति ॥** प्रकृते स्वरूपघटित-सामानाधिकरण्यसम्बन्धेन एकाभावेन विशिष्टो भवति अपरः अभावः । अतः स्वरूपसम्बन्धेन तदभाव एव विशेष्याभावविशेषणाभावरूपः ।




न तु विषयितासम्बन्धेनाभावः-



## ॥ गादाधरी ॥

संयोगादिरूपव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताक-वह्न्यभावात्यन्ताभावस्य अखण्डस्य सकलधूमवन्निष्ठत्वेऽपि तदभावप्रतियोगिता न हेतुतावच्छेदकीभूत-वह्न्यभावत्वावच्छिन्ना। तत्र लाघवेन अभावत्वस्यैवावच्छेदकत्वात् इति न तमादायापि लक्षणसङ्गतिः।

---

**संयोगादिव्यधिकरणेति** ॥ अभावः संयोगसम्बन्धेन कुत्रापि न वर्तते इति स सम्बन्धः व्यधिकरणसम्बन्धः। तत्सम्बन्धावच्छिन्नप्रतियोगिताकः हेत्वभावः अखण्डः सकलविपक्षवृत्तिश्च। अतः अव्याप्तिपरिहारः इति भावः।

**लाघवेनाभावत्वस्यैवेति** ॥ घटाभावस्य स्वरूपेण योऽभावः तदीय प्रतियोगितायां यदि केवलम् अभावत्वम् अवच्छेदकं तर्हि अभावसामान्यं घटाभावाभावस्य विरोधि स्यात्। तथा च घटवत्यपि देशे पटाभावसत्वे घटाभावाभावः न स्यात्। अतः तादृशप्रतियोगितायां अतिरिक्तवृत्तिधर्मस्य अभावत्वस्य नावच्छेदकत्वम्। किन्तु घटाभावत्वस्यैव। परन्तु घटाभावस्य संयोगेन योऽभावः तत्र प्रतियोगितायां अभावत्वमात्रस्य अवच्छेदकत्वेऽपि नास्ति बाधकम्। यतः प्रतियोगितावच्छेदकविशिष्टः प्रतियोगी यत्र प्रतियोगितावच्छेदकसम्बन्धेन वर्तते तत्रैव अभावः न भवति। प्रकृते अभावत्वविशिष्टः अभावः कुत्रापि संयोगेन नास्ति इति व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकस्य अभावस्य केवलान्वयित्वं निराबाधं सिद्ध्यति।

१. घटाभावस्य - अभावः

स्वरूपेण

घटाभावः।

प्रतियोगिता।

(—)

घटाभावत्वम्।

## ॥ गादाधरी ॥

न च गुरुधर्मावच्छिन्नहेतुकस्थले लक्षणसङ्गमनाय पारिभाषिकमेवावच्छेदकत्वं हेतुतावच्छेदके निवेश्यम्। तथाच वह्न्यभावत्वादेरपि तादृशावच्छेदकत्वम् अक्षतमेवेति वाच्यम्। एतल्लक्षणस्य परित्याज्यतया निखिलदोषोद्धारानावश्यकत्वेन पारिभाषिकावच्छेदकत्वं न निविष्टमित्यभिप्रायेण तद्दोषदानादिति वदन्ति।

तदसत्, तथा सत्यपि सकलसाध्याभाववन्निष्ठं कालिकसम्बन्धावच्छिन्नप्रतियोगिताक-वह्न्यभावाद्यभावमादाय लक्षणसमन्वयसम्भवात्।

---

२. 


प्रकृतेऽपि वह्न्यभावान्यत्वविशिष्ट-वह्न्यभावस्य संयोगेन यो अभावः तस्य प्रतियोगितायामपि अभावत्वमेव अवच्छेदकम्। न तु वह्न्यभावत्वम्। तथा च प्रतियोगितायाः हेतुतावच्छेदकावच्छिन्नत्वाभावात् नायं अभावः लक्षणघटकः।

**गुरुधर्मावच्छिन्नहेतुकस्थले इति ॥** 'पर्वतः वह्निमान् प्रमेयधूमात्' इत्यादौ इत्यर्थः। अत्र प्रमेयधूमत्वं हेतुतावच्छेदकम्। तस्य च गुरुत्वात् न प्रतियोगितावच्छेदकत्वम्। अतः तत्र हेतुतावच्छेदकावच्छिन्न-प्रतियोगिताकः अभावः अप्रसिद्धः। तद्वारणाय गुरुधर्मसाधारणं पारिभाषिकं अवच्छेदकत्वं निवेश्यम्। तथा च प्रकृतेऽपि गुरुभूतस्य वह्न्यभावान्यत्वविशिष्टनिर्वह्नित्वस्य अवच्छेदकत्वसिद्धिः इत्यर्थः। **परित्याज्यतयेति ॥** चतुर्थलक्षणं परित्यज्य पञ्चमलक्षणकरणात्।

**कालिकसम्बन्धावच्छिन्नप्रतियोगिताकेति ॥** वह्न्यभावस्य स्वरूपेण अभावः वह्निरूपः। विषयितया अभावः अप्रसिद्धः। तस्याः वृत्यनियामकत्वात्। संयोगः व्यधिकरणसम्बन्धः। अतः तेन सम्बन्धेन अभावग्रहणे अभावत्वमात्रं

## ॥ गादाधरी ॥

न च जन्यमात्रस्य कालोपाधितानये साध्याभाववति पर्वतादौ कालिक-सम्बन्धेन वह्न्यभावसत्त्वात् तत्र तत्सम्बन्धेन तदभावो न वर्तते एवेति वाच्यम्। कालिकसम्बन्धेन तत्र वह्न्यभावसत्त्वेऽपि प्रतियोग्यनधिकरणीभूत-वह्निमद्देशा-वच्छेदेन तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताक-तदभावस्यापि सत्त्वात्।

एवं विशिष्टाभावस्य विशेष्याभाव-विशेषणाभावाभ्यामनतिरिक्तत्वे 'द्रव्यं विशिष्टसत्त्वात्' इत्यादौ एव अव्याप्तिसम्भवे तदुपेक्ष्य अभावसाध्यकाभावहेतुक-स्थलानुधावने बीजाभावात्।

---

अवच्छेदकम्। अथापि कालिकसम्बन्धः न वृत्यनियामकः, नापि व्यधिकरणः। न च तेन सम्बन्धेन वह्न्यभावस्याभावः वह्निरूपः। अतः तेन सम्बन्धेन वह्न्यभाव-स्याभावः अखण्डः, सर्वविपक्षानुगतः इति नास्त्येव अव्याप्तिः।

**प्रतियोग्यनधिकरणीभूतेति** ॥ वह्न्यभावाभावस्य प्रतियोगी वह्न्यभावः। तस्य अनधिकरणः देशः वह्निमद्देशः। तदवच्छेदेन कालरूपे पर्वते कालिकेन वह्न्यभावः नास्ति। पर्वतस्य कालरूपत्वं स्वीकृत्य किल तत्र वह्न्यभावः कालिकविशेषणता सम्वन्धेन अस्तीति उच्यते। काले वृत्तौ च देशस्यावच्छेदकत्वम्। अतः पर्वतरूपे खण्डकाले कालिकसम्वन्धेन नितम्बावच्छेदेन वह्न्यभावस्याभावः, अग्रावच्छेदेन वह्न्यभावश्च स्तः।

| | |
|---|---|
| वह्निमद्देशः | ← वह्न्यभावः कालिकेन नास्ति |
| वह्न्यभाववद्देशः | ← कालिकेन वह्न्यभावः |

(पर्वतः = कालः)

**अव्याप्तिसम्भवे इति** ॥ अत्र हेत्वभावः = गुणकर्मान्यत्वविशिष्टसत्वाभावः।

१ २ १ २

गुणकर्मान्यत्व + सत्वस्य अभावः = गुणत्व-कर्मत्वे वा सत्वाभावः

सामानाधिकरण्यम्

## ॥ गादाधरी ॥

एतेन 'विशेषणताविशेषसम्बन्धेन वृत्तिघटितसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावव्याप्यवान् तादृशसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावात्' इत्येतत्परम्।

तत्र धूमसामानाधिकरण्यरूपस्य सकलसाध्याभावस्याधिकरणं हेतुरपि, तस्य धूमाधिकरणे सत्त्वात्। तत्र च हेतुभेदमादायापि न लक्षणसमन्वयसम्भवः।

---

अत्र विशेषणं = गुणकर्मान्यत्वं = गुण-कर्मभेदः। विशेषणस्याभावः = गुण-कर्मभेदस्य अभावः = गुणत्वं + कर्मत्वम्। विशेष्यम्= सत्वम्। विशेष्याभावः= सत्वाभावः।

तथा च साध्याभाववति गुणादौ एतत्त्रयं नास्तीति प्रसिद्धानुमाने एव अव्याप्तिः वक्तुं शक्यते। व्यर्थं अप्रसिद्धसाध्यकानुधावनम्।

**एतेनेति ॥** साध्यं= सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकः यः धूमाभावः तद्व्याप्यम्। धूमः विशेषणताविशेषसम्वन्धघटितसामानाधिकरण्यसम्बन्धेन पर्वतगतघटाभावे अस्ति-




विशेषणताविशेषसम्वन्धेन वृत्तिघटित-सामानाधिकरण्यसम्बन्धावच्छिन्न-प्रतियोगिताकः यः धूमाभावः तद्व्याप्यवान्। तादृशसम्बन्धावच्छिन्नप्रतियोगिताक-वह्न्यभावात् इत्यनुमानम्। अत्र ह्रदकूपादिवत् पर्वतमहानसादिरपि पक्षकोटावेव अन्तर्भवति । पर्वतादौ संयोगेन वह्नेः सत्त्वेऽपि सामानाधिकरण्यसम्वन्धेन वह्निः नास्ति। एवमेव धूमोऽपि तेन सम्वन्धेन नास्ति इति धूमाभावव्याप्यं भवति पर्वतत्वादि-कम्। इत्थं पर्वतेऽपि हेतुसाध्ययोः सत्त्वं बोध्यम्। पर्वतवृत्तिः अभावश्च विपक्षः। तत्र धूमसामानाधिकरण्यरूपस्य साध्याभावस्य सत्त्वात्।

## ॥ गादाधरी ॥

अत्यन्ताभावमादाय तदसम्भवो दर्शितरीत्या अवसेयः। इत्थञ्च विशिष्टाभावस्य विशेष्याभावविशेषणाभावाभ्यामतिरिक्तत्वेऽपि न दोषासङ्गतिरिति परास्तम्। तत्रापि कालिकसम्बन्धा-वच्छिन्नाभावमादाय दोषवारणसम्भवात्।

तस्मात् प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगिवैयधिकरण्यं निविष्टं प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वेन निविष्टा इत्यभिप्रायेणैव एतद्दोषदानम्। हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यदाने तु अग्रिम-लक्षणापेक्षया गौरवमेव एतल्लक्षणपरित्यागे बीजं बोध्यम्।

---

**दर्शितरीत्या अवसेयः इति** ॥ प्रकृते धूमाधिकरणे स्वरूपसम्बन्धेन विद्यमानाः अभावाः विपक्षाः। अत्र हेतोः अत्यन्ताभावः वह्निसामानाधिकरण्यरूपः। स च वह्न्यधिकरणवृत्तित्वम्। वृत्तित्वं च आधेयता। सा च तत्तदाधेयरूपा अननुगता। तस्मात् निखिलविपक्षवृत्तिरेकहेत्वभावः अप्रसिद्धः इति।

**तस्मादिति** ॥ दीधितिकारः प्रतियोगिवैयधिकरण्यं उभयत्राभावे निवेश्यं इत्युक्त-वान्। तत्र सम्बन्धविशेषः तेन नोक्तः। गदाधरः लाघवतर्कं अनुसृत्य हेतुतावच्छेदक-सम्बन्धं स्वयं तत्र विनिवेशितवान्। तेन च वह्न्यभावभेदमादाय, चतुर्थलक्षणस्य, मूलकारोक्ताव्याप्तेः असङ्गतिः सञ्जाता। अतः अन्ततो गत्वा प्रतियोगिवैयधिकरण्य-शरीरे हेतुतावच्छेदकसम्बन्धं परित्यज्य प्रतियोगितावच्छेदकसम्बन्धं विनिवेशित-वान्। तथा सति धूमसाध्यके अयोगोलके समवायेन वह्न्यभावमादाय अतिव्याप्तिः भवति। तत्परिहाराय हेत्वभावीय प्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेश्यम्। तथा च प्रकृते हेतुभेदः नैव लक्षणघटकः इति उपपद्यते दीधितिकारोक्ता अव्याप्तिः।

एवं च अव्याप्त्यभावशङ्का 'मूलासम्मतं कृत्वा कुचोद्यं करोति' इतीव भाति। परं विचार्यमाणे अत्र दीधितिकृन्मते गदाधरेण गौरवम् प्रदर्शितम्। तन्मते साध्याभावे प्रतियोगिवैयधिकरण्यशरीरे चेति उभयत्र सम्बन्धनिवेशात्। स्वमते प्रतियोगि-वैयधिकरण्यशरीरे एव तन्निवेशात्। तस्मात् वस्तुतः चतुर्थलक्षणस्य गौरवं विना नान्यः दोषः इत्येव गदाधरस्य गूढाभिसन्धिः। अत एव जगदीशः नात्रैवं कोलाहलं चकारेति ऊहनीयम्।

## ।। गादाधरी ।।

**एतेन ''सकलशब्दस्य व्यापकत्वार्थकतया साध्याभावव्यापकीभूताभाव-प्रतियोगित्वमेव निष्कृष्टैतल्लक्षणार्थः । 'धूमवान् वह्नेः' इत्यादौ प्रमेयत्वादिना वह्न्यभावस्य साध्याभावव्यापकत्वेऽपि न क्षतिः । यद्रूपावच्छिन्नप्रतियोगिताका-भावत्वं साध्याभावव्यापकतावच्छेदकं तद्रूपवत्त्वस्यैव लक्षणत्वात् ।**

**एवञ्च हेत्वभावे प्रतियोगिवैयधिकरण्यं न निवेश्यते । व्यापकतालक्षणे प्रति-योगिवैयधिकरण्यानिवेशेन अव्याप्यवृत्तिहेतुकव्यभिचारिणि हेत्वभावस्य साध्या-भाववन्निष्ठहेतुरूपाभावप्रतियोगितया व्यापकत्वासम्भवेन अतिप्रसङ्गविरहात् ।**

---

**सकलशब्दस्येति** ।। सकलशब्दः स्वसमभिव्याहृतपदार्थतावच्छेदकव्यापकत्वं पदार्थान्तरे बोधयति । लक्षणवाक्ये सकलशब्दसमभिव्याहृतं पदं साध्याभाववत् पदम् । तदवच्छेदकः साध्याभावः । तद्व्यापकत्वं हेत्वभावे बोध्यते ।

**प्रमेयत्वादिनेति** ।। 'यत्र धूमाभावः तत्र प्रमेयम्' इति व्याप्तिः । **यद्रूपावच्छि-न्नेति** ।। यद्रूपपदेन हेतुतावच्छेदकं ग्राह्यम् । धूमहेतुके तच्च रूपं धूमत्वम् । धूमत्वाव-च्छिन्न-प्रतियोगिताकः अभावः धूमाभावः । स च वह्न्यभावव्यापकः । व्यापकतायां धूमाभावत्वं अवच्छेदकम्-




एवं विवक्षिते च वह्नौ नातिव्याप्तिः । धूमाभावस्य वह्न्यभावः प्रमेयत्वेन व्यापकः। न तु वह्न्यभावत्वेन । अतः व्यापकतावच्छेदकं प्रमेयत्वम् । न तु वह्न्यभावत्वम् ।

**व्यापकतालक्षणे इति** ।। तदधिकरणवृत्ति-अत्यन्ताभावाप्रतियोगित्वं व्याप-

## ॥ गादाधरी ॥

व्यापकताशरीरे च हेतुतावच्छेदकसम्बन्धेन साध्याभाववन्निष्ठत्वम् अभावे निवेश्यम् । तेन वह्न्याद्यभाववति कालिकादिसम्बन्धेन धूमादिरूपाभावस्य वृत्तावपि धूमाभावादेर्न साध्याभावव्यापकताक्षतिः ।

---

कत्वम्। अत्र च अत्यन्ताभावे प्रतियोगिवैयधिकरण्यं न निविष्टम्। **अव्याप्यवृत्ति-हेतुक-व्यभिचारिणीति ॥** 'एतद्वृक्षत्ववान् कपिसंयोगात्' इत्यत्र। अत्र एतद्वृक्षत्वाभाववति तद्वृक्षे कपिसंयोगाभावस्यापि सत्वेन अतिव्याप्तिः। तत्परिहाराय पूर्वं हेत्वभावे प्रतियोगिवैयधिकरण्यं निविष्टम्। व्यापकतायाः लक्षणे निवेशे च तत् अनावश्यकम्। तथाहि- तत्र एतद्वृक्षत्वाभावस्य कपिसंयोगाभावः व्यापकः इति वक्तव्यम्। तस्य व्यापकत्वमेव न सम्भवति। तद्धि तदधिकरणवृत्तिः यः अभावः तदप्रतियोगित्वम्। प्रकृते च तत्= एतद्वृक्षत्वाभावः। तस्याधिकरणं = तद्वृक्षः। तत्र कपिसंयोगाभावाभावः अस्ति। तस्य प्रतियोग्येव भवति कपिसंयोगाभावः। न तु अप्रतियोगी। व्यापकतालक्षणे प्रतियोगिवैयधिकरण्यनिवेशे पुनः तदधिकरणवृत्ति-अभावपदेन कपिसंयोगाभावाभावः न गृहीतुं शक्यते। तस्य कपिसंयोगाभावरूप-प्रतियोगि-समानाधिकरणत्वात्। अतः व्यापकत्वं सिद्ध्यति । तेन च अतिव्याप्तिप्रसक्तिः । तद्वारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यं निवेश्यम् भवेत्।

१. साध्याभावाधिकरणवृत्तिः यः **प्रतियोगिव्यधिकरणः** अभावः तस्य अप्रतियोगी यः **प्रतियोगिव्यधिकरणः** हेत्वभावः तत्प्रतियोगित्वम्।

२. साध्याभावाधिकरणवृत्तिः यः अभावः तदप्रतियोगी यः हेत्वभावः तत्प्रतियोगित्वम्।

व्यापकतालक्षणे प्रतियोगिवैयधिकरण्यनिवेशे हेत्वभावेऽपि तन्निवेशनीयं आपतति। तत्र त्यागे उभयत्र त्यागः इति महत् लाघवम्।

## ।। गादाधरी ।।

'सत्तावान् जातेः' इत्यादौ साध्याभाववति हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्याऽव्याप्तिश्च लक्षणपञ्चक एव दोषः।

अस्तु वा हेतुतावच्छेदकसम्बन्धेन हेतुमत्ताज्ञानं प्रति यादृशसम्बन्धेन हेत्वभाववत्ताग्रहः प्रतिबन्धकः तादृशसम्बन्धेन स्वावच्छिन्नाधिकरणभिन्न-साध्याभावाधिकरणकं यद्यत्स्वं तद्भिन्नत्वमेव साध्याभावव्यापकतावच्छेदकत्वम्।

---

**वृत्तेरप्रसिद्ध्येति ।।** तत्र साध्याभाववति सामान्यादौ समवायेन कस्यापि वृत्तित्वं नास्तीति तत्सम्बन्धावच्छिन्न-सामान्यनिरूपितवृत्तित्वं अप्रसिद्धम्।

**लक्षणपञ्चके एवेति ।।** चतुर्षु लक्षणेषु 'अवृत्तित्वम्' प्रविष्टमिति हेतुतावच्छेदकसम्बन्धेन वृत्त्याप्रसिद्ध्या अव्याप्तिः समाना। अतः नायं चतुर्थलक्षणमात्रस्य दोषः।

**स्वावच्छिन्नाधिकरणेति ।।** अत्र स्वपदेन व्यापकतानवच्छेदकः धर्मः ग्राह्यः। 'वह्निमान् धूमात्' इत्यत्र तादृशं शैवालाभावत्वम्। साध्याभावाधिकरणं ह्रदः स्वरूपसम्बन्धेन यदवच्छिन्न-अधिकरणभिन्नं भवति, तादृशं यत् स्वं= शैवालाभावत्वमेव। न तु धूमाभावत्वम्। ह्रदस्य तदवच्छिन्नाधिकरणत्वात्। अतः धूमाभावत्वस्य व्यापकतावच्छेदकत्वनिर्वाहः।

स्वम्= शैवालाभावत्वम्



शैवालाभावः



| साध्याभावाधिकरणं =ह्रदः |
|---|

स्वम्= धूमाभावत्वम्



धूमाभावः



| साध्याभावाधिकरणं =ह्रदः |
|---|

## ॥ गादाधरी ॥

इत्थञ्च, 'सत्तावान् जातेः' इत्यादौ एतादृशं स्वं जातित्वाभावत्वादिकमेव। तद्भिन्नश्च जात्यभावत्वादिकमिति लक्षणसमन्वयः।

इत्थञ्च 'एतद्वृक्षत्ववान् कपिसंयोगात्' इत्यादौ कपिसंयोगाभावत्वावच्छिन्नानधिकरणत्वाप्रसिद्ध्या कपिसंयोगाभावत्वं नैतादृशं स्वमिति कपिसंयोगाभावत्वस्य साध्याभावव्यापकतावच्छेदकत्वात् अतिव्याप्तिवारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणं देयमेव।

---

'सत्तावान् जातेः' इत्यत्र -

स्वम्= जातित्वाभावत्वम्



जातित्वाभावः



साध्याभावाधिकरणम् = सामान्यम्

स्वम् = जात्यभावत्वम्



जात्यभावः



साध्याभावाधिकरणम् = सामान्यम्

पूर्वं साध्याभावाधिकरणवृत्यभावस्य हेत्वभावः अप्रतियोगी स्यात् इत्युक्तम्। तथा सति हेतुतावच्छेदकसम्बन्धेन वृत्यप्रसिद्ध्या अव्याप्तिः प्रसक्ता। इदानीं साध्याभावाधिकरणं हेत्वभावाधिकरणभिन्नं न भवेदित्युच्यते। अतो नाप्रसिद्धिः।

**नैतादृशं स्वमिति ॥** स्वपदेन कपिसंयोगाभावत्वग्रहणे तदवच्छिन्नस्य कपिसंयोगाभावस्य केवलान्वयितया तदनधिकरणाप्रसिद्धिः। अतः स्वपदेन अन्यदेव ग्राह्यम्। तथा च कपिसंयोगाभावस्यापि व्यापकत्वसिद्धिः। तद्वारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यं निवेशनीयं आपतितम्।

## ॥ गादाधरी ॥

न देयमेव वा। अधिकरणत्वाभावस्यैवाधिकरणभिन्नत्वस्थाने निवेशनीयत्वात् । कपिसंयोगाभावादेरिव तदधिकरणताया अपि अव्याप्यवृत्तितया तदभावस्य साध्याभाववति सत्त्वेन अतिव्याप्त्यनवकाशात् । अधिकरणत्वाभावश्च भावप्रतियोगिकतयाऽतिरिक्त एवेति विशेषणताविशेषेणैव तद्वत्त्वं साध्याभाववति विशेषणीयमिति।

---

**न देयमेव वेति ॥** साध्याभावाधिकरणे हेत्वभावाधिकरणभेदनिवेशे पूर्वोक्तदिशा अप्रसिद्ध्या संयोगाभावस्य व्यापकत्वसिद्धिः। अतः भेदस्थाने अधिकरणत्वाभावः निवेश्यते। प्रकृते च कपिसंयोगाभावाधिकरणत्वाभावःनाप्रसिद्धः। कपिसंयोगाभाववति वृक्षादौ तदधिकरणभेदस्य व्याप्यवृत्तेः असम्भवेऽपि तदधिकरणत्वाभावः सम्भवत्येव । वृक्षे संयोगतदभावयोरिव, संयोगाभावाधिकरणत्व-तदभावयोरपि सत्वात् । अतः नाप्रसिद्धिः । तथा च संयोगाभावः व्यापकः एव न भवतीति न हेत्वभावे प्रतियोगिवैयधिकरण्यं निवेश्यम्।

ननु धूमाभावाधिकरणत्वाभावः = धूमः। तयोः समनियतत्वात्-




अतः साध्यभावाधिकरणं ह्रदः, कालिकसम्बन्धेन धूमरूपस्य धूमाभावाधिकरणत्वाभावस्य अधिकरणमेव भवतीति अव्याप्तिः। तत्परिहाराय पुनः अनधिकरणत्वं हेतुतावच्छेदकसम्बन्धेन इति वक्तव्यम् । तथा च अस्त्येव सत्तावान् जातेरित्यत्र पूर्वोक्ताप्रसिद्धिः । अत आह- **अधिकरणत्वाभावादिश्चेति ॥ भावप्रतियोगिकतयेति ॥** अभावप्रतियोगिकः एव अभावः प्रथमाभावप्रतियोगिरूपः। अधिकरणत्वाभावस्तु अधिकरणत्वरूप-भावप्रतियोगिकः। अतः धूमसमनियतोऽपि अयमभावः न धूमस्वरूपः इत्यर्थः।

## ।। गादाधरी ।।

एवञ्च 'निर्धूमत्वव्याप्यवान् निर्वह्नित्वात्' इत्यादौ हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वेऽपि हेत्वभावत्वेन तेषां साध्याभावव्यापकत्वान्नाव्याप्तिः'' इति पूर्वपक्षोऽप्यकिञ्चित्करः। यत्र यावतां साध्याभाववतां सम्भवः तत्र प्रातिस्विकरूपेण तत्तदधिकरणवृत्तित्वमेव हेत्वभावविशेषणतया लक्षणघटकम्, न तु साध्याभावव्यापकत्वम् इत्यभिप्रायेणैव एतद्दोषदानात्, प्रकारान्तरानुसारेण परिष्कारे सकललक्षणानामेव परिष्कारसम्भवादिति कृतं पल्लवितेन।

---

**साध्याभावव्यापकत्वात् इति ।।** वह्न्यभावः हेतुः। तदभावश्च वह्निरूपः। तस्य एकस्य सकलविपक्षवृत्तित्वाभावेऽपि वह्न्यभावाभावत्वावच्छिन्नस्य व्यापकत्वं निर्वहति। न हि तत्र स्वपदेन वह्न्यभावाभावत्वं गृहीतुं शक्यते। साध्याभावाधिकरणेषु पर्वतादिषु तदवच्छिन्नाधिकरणत्वाभावस्य वक्तुं अशक्यत्वात्। अतो नाव्याप्तिसम्भवः इत्यर्थः।

अयं पक्षः जगदीशभट्टाचार्येणादृतः। तं निरस्यति- **अकिञ्चित्कर इति ।। प्रातिस्विकरूपेणेति ।।** ह्रदत्वेन, कूपत्वेनेत्यादिना।

तथा च यथाश्रुतलक्षणे दीधितिकारेण अव्याप्तिः उक्ता। लक्षणं परिष्कृत्य तदुक्ताव्याप्तिः नास्तीत्युक्तिः न कौशलं आवहति। तथा सति तृतीयलक्षणस्य यः दोषः दीधितिकारेण उक्तः 'हेतोः साध्यवत् पक्षभिन्नदृष्टान्तवृत्तित्वेनेति' सोऽपि साध्यवत्त्वावच्छिन्नप्रतियोगिताक-भेदं निवेश्य परिहर्तुं शक्यते इत्यलम्।

०-०-०

## ॥ दीधितिः ॥

***अथ पञ्चमलक्षणम्***

अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिवललभ्यम् ।

## ॥ गादाधरी ॥

साध्यवद्व्यक्तिविशेषभेदमादायाव्याप्तिं परिहरति- **अत्रेति ॥ साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वमिति ॥** साध्यतावच्छेदकविशिष्ट-साध्यवत्त्वपर्याप्तप्रतियोगितावच्छेदकताकत्वमित्यर्थः ।

---

**साध्यपर्याप्तेति ॥** 'वह्निमान् न' इत्येव भेदः तादृशः । न तु 'महानसीयवह्निमान् न' इति भेदः ।




अत्र अवच्छेदकता वह्नित्वविशिष्टवह्नौ एव वर्तते । अतः अयं भेदः साध्यतावच्छेदकविशिष्टसाध्य-पर्याप्तावच्छेदकताकः भवति। 'महानीयवह्निमान् न' इति भेदस्तु नैतादृशः। तत्र प्रतियोगी महानसीयवह्निः। प्रतियोगिता तन्निष्ठा। तस्यां च अवच्छेदकं महानसीयत्वविशिष्टवह्नित्वम्। इत्थं तदीयावच्छेदकतायाः महानसीयत्वेऽपि पर्याप्तत्वात् नायमभावः लक्षणघटकः ।

## ।। गादाधरी ।।

तेन 'वह्निमान् धूमात्' इत्यादौ तत्तद्वह्निमत्त्वावच्छिन्नप्रतियोगिताकभेद-मादाय न दोषः। तादृशभेदप्रतियोगितावच्छेदकतायाः तत्ताविशिष्टवह्निमत्त्वे एव पर्याप्तत्वात्।

'व्युत्पत्तिवललभ्यम्' अन्यादिपदसमभिव्याहारलभ्यम्। नञादिपदसमभि-व्याहारज्ञानस्येव एतादृशपदसमभिव्याहारज्ञानस्यापि अन्वयितावच्छेदकधर्मा-वच्छिन्नप्रतियोगिताकाभाव-शाब्दबुद्धित्वावच्छिन्नं प्रत्येव जनकत्वादिति भावः। 'व्युत्पत्तिबललभ्यम्' इत्यनेन यथाश्रुतलक्षणवाक्यार्थ एवायमिति सूचितम्।

---




अत्र अवच्छेदकता महानसीयत्वे वह्नित्वे च पर्याप्ता। अतः नायं भेदः लक्षणघटकः।

**अन्यादिपदसमभिव्याहारालभ्यमिति ।।** 'अन्यादिपदसमभिव्याहारज्ञानं अन्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकभेदबोधजनकम्' इति कार्यकारणभावः। 'घटः पटो न' इति वाक्ये पटपदार्थस्य नञ्पदार्थभेदे अन्वयः। अतः भेदः पट-पदार्थान्वितः। पटः अन्वयी। अन्वयितावच्छेदकं पटत्वम्। तथा च पटत्वावच्छिन्न-प्रतियोगिताकः भेदः तद्वाक्यात् बुध्यते। एवमेव अन्यपदसमभिव्याहारेऽपि। अयं विशेषः - यत् नञ्पदं भेदबोधकं, अन्यपदं भेदविशिष्टधर्मिबोधकम् इति।

## ॥ दीधितिः ॥

न हि भवति नीलो घटो घटान्य इति ।

## ॥ गादाधरी ॥

तादृशसमभिव्याहारस्थले तत्प्रतियोगिताकाभावमात्रबोधे अतिप्रसङ्गं सूचयति- **न हि भवतीति** ॥ प्रामाणिकव्यवहार इति शेषः । तथा च अन्वयिप्रतियोगिकाभावमात्रबोधे नीलघटेऽपि पीतघटादिभेदसत्त्वेन तादृशव्यवहारोऽपि स्यादिति भावः ।

एवं 'द्रव्यं न घटः' इत्याद्यप्रयोगात् अनुयोगितावच्छेदकावच्छेदेनैव अन्योन्याभावादिः अन्यादिपदेन प्रत्याय्यते, अनुयोगितावच्छेदकश्च प्रतियोग्यवृत्तिरेव धर्म

---

'नहि भवति नीलो घटः घटान्यः' इति मूलवाक्ये नीलपदकृत्यं वक्तुं आरभते- **एवमिति** ॥ 'द्रव्यं न घटः' इत्यत्र अनुयोगि द्रव्यम् ।

| प्रतियोगी | अनुयोगि |
|---|---|
| घटः न | द्रव्यम् = पटः |

पटे च घटभेदः अबाधितः । अतः अस्य वाक्यस्य प्रामाण्यापत्तिः । तद्वारणाय नञः अन्वयितावच्छेदकावच्छेदेन भेदबोधकत्वं वक्तव्यम् । एवं सति नायं प्रसङ्गः-

प्रतियोगी — अनुयोगि

घटः न → द्रव्यम्



अनुयोगिता

(—)

द्रव्यत्वम्



घटः | पटः....

## ॥ गादाधरी ॥

इति प्रकाशकृदङ्गीकृतव्युत्पत्त्यन्तरविरोधात् 'घटो घटान्यः' इति प्रयोगवारण-सम्भवात् 'नीलः' इति।

'घटादन्यः' इत्यादौ प्राचीनमते पञ्चम्याः प्रतियोगित्वमर्थः।

---

इत्थम् अनुयोगितावच्छेदकं द्रव्यत्वं प्रतियोगिवृत्तिधर्मः। अतः अस्य वाक्यस्य अप्रामाण्यं उपपादयितुं शक्यते। अनयैव व्युत्पत्या 'घटः घटान्यः' इति प्रयोगोऽपि वार्यते। परन्तु 'नीलो घटः घटान्यः' इति प्रयोगः नानया व्युत्पत्या वारयितुं शक्यः। अत्र हि,

प्रतियोगी — अनुयोगी

घटः न → नीलघटः

(पीतघटः) ↓

अनुयोगिता

(—)

नीलघटत्वम्

अनुयोगितावच्छेदकं नीलघटत्वं प्रतियोग्यवृत्ति भवतीति नानया व्युत्पत्या अस्य प्रयोगस्य वारणं भवति। अतः व्युत्पत्यन्तरं अङ्गीकार्यम्। **प्रकाशकृदिति** ॥ मणि-ग्रन्थस्य व्याख्याता रुचिदत्तः।

**प्राचीनमते इति** ॥ तन्मते वृत्यनियामकसम्बन्धस्यापि अभावप्रतियोगिता-वच्छेदकत्वस्वीकारात्। प्राचीन-नवीनमतयोः अयं विशेषः -

प्राचीनमते -

| | प्रतियोगी | | | अनुयोगी |
|---|---|---|---|---|
| | घटात् | | अन्यः | पटः |
| पदानि | घट | पञ्चमी | अन्य | पट |
| पदार्थाः | घटः | प्रतियोगिता | भेदवान् | पटः |
| सम्बन्धौ | आधेयता | | **निरूपकत्वम्** | |

## ॥ गादाधरी ॥

तत्र च प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य घटत्वाद्यवच्छिन्नत्वविशिष्टाधेयता-सम्बन्धेनान्वयः।

---

नवीनमते -

| | | | | |
|---|---|---|---|---|
| | प्रतियोगी | | | अनुयोगी |
| | घटात् | | अन्यः | पटः |
| पदानि | घट | पञ्चमी | अन्य | पट |
| पदार्थाः | घटः | अनुयोगिता | भेदवान् | पटः |
| सम्वन्धौ | निरूपितत्वम् | | **आश्रयत्वम्** | |

'पटः घटात् अन्यः' इत्यत्र शाब्दबोधः -

| | | | | |
|---|---|---|---|---|
| पदानि | घट - | पञ्चमी - | अन्य - | पट |
| अर्थाः | घटत्वविशिष्टः | प्रतियोगिता | भेद-वान् | पटः |
| सम्वन्धाः | घटत्वावच्छिन्नत्व+ आधेयता | निरूपकता | अभेदः | |

तथा च 'घटनिष्ठघटत्वावच्छिन्नप्रतियोगिता निरूपकभेदवदभिन्नः पटः' इति प्राचां मते बोधः।

**अवच्छिन्नत्वविशिष्टाधेयतासम्बन्धेनेति ॥** सामानाधिकरण्यसम्बन्धेन अत्र वैशिष्ट्यम् बोध्यम्। अवच्छिन्नत्वस्य आधेयतायाश्च प्रतियोगितायामेव सत्वात्। तेन फलतः प्रतियोगितायां घटत्वावच्छिन्नत्वं लभ्यते। अनेन, 'अवच्छिन्नत्वविशेषित-प्रतियोगितायाः अलाभाच्च' इति कृष्टभट्टोक्तदूषणं परास्तम्। नहि अत्र स्वरूपसम्वन्धेन घटत्वावच्छिन्नत्वं आधेयतायां विशेषणत्वेन अभिप्रेतं गदाधरेण। असम्भवात्। किन्तु समानाधिकरण्येन। अत एव 'विशिष्ट' इति पदं प्रयुक्तम्।

## ।। गादाधरी ।।

**अथवा केवलाधेयत्वमेव घटस्य सम्बन्धः, धर्मिपारतन्त्र्येण घटत्वादेरपि अवच्छिन्नत्वसम्बन्धेन तत्रान्वयोपगमात्। एकत्र विशेषणत्वेनोपस्थितस्यापि अन्यत्र पारतन्त्र्येणान्वयस्य व्युत्पत्तिसिद्धत्वात्। प्रतियोगित्वस्य व्युत्पत्तिवैचित्र्येण अन्यपदार्थैकदेशे भेदे निरूपकतासम्बन्धेनान्वयः।**

---

**धर्मिपारतन्त्र्येणेति ।।** धर्मिणः अन्वयप्रयुक्तं अन्वयः इत्यर्थः। विशिष्टस्यान्वये विशेषणस्यापि अन्वयनियमात्।

ननु घटपदेन घटत्वं घटे विशेषणतया उपस्थितम्। कथं तस्य पुनः पञ्चम्यर्थ-प्रतियोगितायां विशेषणत्वेन अन्वयः? एकत्र विशेषणत्वेनोपस्थितस्य अन्यत्र विशेषणत्वेन अन्वयायोगात्। अत आह- **पारतन्त्र्येणान्वयस्येति ।।** 'पचन्तं पश्यति' इत्यत्र पच् धात्वर्थः शत्रर्थकर्तृत्वे विशेषणतया उपस्थितः। अतः तस्य स्वातन्त्र्येण द्वितीयार्थकर्मत्वे नान्वयः। अत एव तद्वाक्यात् 'पाककर्तारं पश्य' इत्येव बोधः, न तु पाकक्रियां पश्येति।

'पचन्तं पश्यति' इत्यत्रान्वयः -

शब्दाः पच् (धातुः) + अत् (शतृप्रत्ययः) अम् (द्वितीया विभक्तिः)
अर्थाः- पाकक्रिया + कृतिमान् + कर्मत्वम्।
सम्बन्धः - अनुकूलत्वं आधेयत्वम्

'घटात् अन्यः' इत्यत्र पञ्चम्यर्थ-प्रतियागित्वस्य कथम् अन्यपदार्थैकदेशे भेदे अन्वयः। 'पदार्थः पदार्थेन अन्वेति न तु तदेकदेशेन' इति व्युत्पत्तिविरोधात्। अन्यथा 'नित्यो घटः' इत्यपि प्रयोगः प्रामाणिकः स्यात्। तत्रापि घटपदार्थैकदेशे घटत्वे नित्यत्वान्वयस्य वक्तुं शक्यत्वात्। अत आह- **व्युत्पत्तिवैचित्र्येणेति ।।** सेयं व्युत्पत्तिः उत्सर्गा। समभिव्याहारविशेषे 'चैत्रस्य गुरुकुलम्' इत्यादौ तत्सङ्कोचस्यावश्यकत्वात् इत्यर्थः।

## ॥ गादाधरी ॥

'घटान्यः' इत्यादौ च निरूपकतासम्बन्धेन घटत्वावच्छिन्नप्रतियोगिता-विशिष्टो लक्षणया घटादिपदार्थः। तत्पुरुषस्थले पूर्वपदस्य तत्तद्विभक्त्यन्तार्थ-विशिष्टलाक्षणिकत्वात्। तादृशघटादिपदार्थस्य चाभेदसम्बन्धेन भेदेऽन्वयः।

नवीनमते च 'घटादन्यः' इत्यादौ अनुयोगित्वं पञ्चम्यर्थः। तत्र च प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य स्ववृत्तिघटत्वाद्यवच्छिन्ननिरूपकताकत्वसम्बन्धेनान्वयः। अनुयोगितायाश्च आश्रयतासम्बन्धेन भेदेऽन्वयः। समासस्थले च घटत्वाद्य-

---

**घटान्यः इत्यादाविति ॥** विग्रहवाक्ये पञ्चम्यर्थद्वारा नामार्थयोः भेदान्वयेऽपि समासे तयोः भेदेन अन्वयबोधः नैव वक्तव्यः। अतः तत्र पूर्वपदस्य लक्षणा कार्या। **तत्तद्विभक्त्यन्तार्थेति ॥** प्रकृते 'घटात् अन्यः' इति व्यासे विभक्तिः= पञ्चमी विभक्तिः। तदन्तः शब्दः= 'घटात्' इति पञ्चम्यन्तः। तस्यार्थः= 'घटनिष्ठ-घटत्वावच्छिन्नप्रतियोगिता' इति। तद्विशिष्टे घटपदस्य लक्षणा। अतः 'घटान्यः' इत्यत्र शाब्दबोधः-

| | | | |
|---|---|---|---|
| पदे - | घट | - | अन्य |
| अर्थौ - | घटनिष्ठघटत्वावच्छिन्नप्रतियोगिताविशिष्टः | - | भेदवान् |
| सम्बन्धः - | | अभेदः | |

नवीनमते व्यासे शाब्दबोधः -

| | | | | | |
|---|---|---|---|---|---|
| शब्दाः- | घट | - | पञ्चमी | - | अन्य |
| अर्थाः- | घटत्वविशिष्टः | | अनुयोगिता | | भेदवान् |
| सम्बन्धौ- | | स्ववृत्तिघटत्वावच्छिन्न-निरूपकताकत्वम् | | आश्रयता | |

## ॥ गादाधरी ॥

वच्छिन्ननिरूपितानुयोगिताविशिष्टे पूर्वपदस्य लक्षणा। तस्य चाभेदसम्बन्धेन भेदेऽन्वयः।

अथैवं 'साध्यवदन्यावृत्तित्वम्' इत्येतादृशलक्षणवाक्यात् अभेदसम्बन्धेन तादृशप्रतियोगिताविशिष्टविशेषितः तादृशानुयोगिताविशिष्टविशेषितो वा यो भेदः तद्वदवृत्तित्वमेव प्रतीयते। तथाच अनुमित्यौपयिकव्याप्तिस्वरूपजिज्ञासायां

---

अत्र स्ववृत्तीत्यादिसम्वन्धः इत्थं योजनीयः- स्वं= घटः, स्ववृत्ति= घटत्वं, तदवच्छिन्ना= निरूपकता। सा च घटेऽस्ति। घटस्य अनुयोगितानिरूपकत्वात्। तत्कत्वम् अनुयोगितायाम्-




**अथैवमिति ॥** लक्षणवाक्यलभ्यं व्याप्तिस्वरूपम्-

१. प्राचीनमते- साध्यवत्वावच्छिन्न-प्रतियोगिताविशिष्टः यः भेदः तद्वदवृत्तित्वम्।

अभेदः

२. नवीनमते - साध्यवत्वावच्छिन्न-निरूपकताकः यः भेदः तद्वदवृत्तित्वम्।

अभेदः

अनुमित्यौपयिक व्याप्तिस्वरूपम्-

साध्यवद्विशिष्टः यः भेदः तद्वदवृत्तित्वम्।

स्वनिष्ठप्रतियोगितानिरूपकत्वम्

वा

स्वनिरूपित-अनुयोगिताश्रयत्वम्

तथा च शाब्दबोधे प्रतियोगित्वं अनुयोगित्वं वा प्रकारतया भासते। व्याप्तिशरीरे तु संसर्गतयेति भेदः।

## ॥ गादाधरी ॥

तादृशलक्षणाभिधाने अर्थान्तरप्रसङ्गः तादृशप्रतियोगितासम्बन्धेन तादृशानुयोगितासम्बन्धेन वा साध्यवद्विशेषितभेदवदवृत्तिताज्ञानस्यैव लाघवेनानुमितिहेतुत्वादिति चेन्न, यादृशव्याप्तिज्ञानमनुमितिहेतुः तस्यामेवास्य तात्पर्यात्। तस्याः शाब्दबोधाविषयत्वेऽपि तन्मूलकोदीच्यतादृशव्याप्तिविषयकमानसोपनीतभानस्यैव तादृशतात्पर्यनिर्वाह्यत्वात्। तादृशशाब्दबोधस्यापि कथञ्चित् उपपादयितुं शक्यत्वाच्च।

'नीलो घटः कम्बुग्रीवादिमदन्यः' इत्यादिवाक्यस्य अप्रमाणत्वात्, 'पटः कम्बुग्रीवादिमदन्यः' इत्यादिवाक्यस्य प्रमाणत्वात् अन्वयितावच्छेदकनिरूपितं

---

**उदीच्येति ॥** अनन्तरभावीत्यर्थः। यथा 'घटवद् भूतलम्' इति वाक्यात् 'घटसम्बन्ध्यभिन्नं भूतलम्' इति बोधस्य उदयेऽपि पश्चात् 'संयोगेन घटविशिष्टं भूतलम्' इति मानसः बोधः जायते तद्वदित्यर्थः।

**शक्यत्वाच्चेति ॥** साध्यवत्पदार्थस्य विशिष्टस्य भेदे अन्वये धर्मिपारतन्त्र्येण साध्यवतोऽपि स्ववृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अन्वयात्।

पदं - साध्यवत् | अन्यः

अर्थः - | साध्य | सम्बन्धावच्छिन्नप्रतियोगिताकः यः भेदः तद्वान्।

(वा)

| साध्य | सम्बन्धावच्छिन्न निरूपित अनुयोगिताविशिष्टः यः भेदः तद्वान्।

ननु 'साध्यवदन्यावृत्तित्वम्' इति लक्षणवाक्ये साध्यवत्पदस्य लक्षणया 'साध्यवत्वावच्छिन्न-प्रतियोगिताकः' इत्यर्थः इत्युक्तम्। साध्यवत्वं च साध्यसम्बन्धः। स च साध्यापेक्षया गुरुभूतः। लघुसमनियत-गुरुधर्मस्य च नावच्छेदकत्वम्। अतः 'साध्यवत्वावच्छिन्न-प्रतियोगित्वम्' अप्रसिद्धम् इति चेत् तत्राह- **नीलो घटः इत्यादिना ॥** 'कम्बुग्रीवादिमदन्यः' इति शब्दात् यदि कम्बुग्रीवादिमत्प्रतियोगिकः भेदः

## ॥ गादाधरी ॥

पारिभाषिकम् अवच्छिन्नत्वं प्रतियोगितायां भासत इत्युपेयम्। अतः 'साध्यवदन्यः' इत्यादौ मतुबन्तप्रतिपाद्यतावच्छेदकस्य साध्यसम्बन्धस्य साध्यापेक्षया गुरुतया अनवच्छेदकत्वेऽपि नोक्तलक्षणवाक्यार्थप्रसिद्धिः। पारिभाषिकं तदवच्छिन्नत्वञ्च तद्विशिष्टसम्बन्धिनिष्ठा अभावीया या या प्रतियोगिता तत्तदवच्छेदकत्वाभावकूटवदवच्छिन्नत्वम्। एतादृशावच्छिन्नत्वस्य च सम्बन्धतया निवेशात् प्रातिस्विकरूपेण तत्तत्प्रतियोगिताव्यक्तीनां दुर्ज्ञेयत्वेऽपि न क्षतिः। सम्बन्धज्ञानस्य विशिष्टबुद्धौ अनपेक्षितत्वात्।

---

बोध्यते तर्हि 'नीलः घटः कम्बुग्रीवादिमदन्यः' इति वाक्यस्यापि प्रामाण्यापत्तिः। नीलघटे कम्बुग्रीवादिमतः पीतघटस्य भेदसत्त्वात्। अथ यदि कम्बुग्रीवादिमत्वावच्छिन्न-प्रतियोगिताकः भेदः बोध्यते। नीलघटे च तादृशभेदस्य अभावात् न तद्वाक्यस्य प्रामाण्यापत्तिः इत्युच्यते तर्हि 'पटः कम्बुग्रीवादिमदन्यः' इति वाक्यस्य अप्रामाण्यापत्तिः। तत्रापि हि कम्बुग्रीवादिमत्वावच्छिन्नप्रतियोगिताकः भेदः बोधनीयः। न च तादृशी प्रतियोगिता प्रामाणिकी। घटत्वापेक्षया कम्बुग्रीवादिमत्वस्य गुरुत्वात्। अतः अगत्या गुरुधर्मस्यापि अवच्छेदकत्वं अङ्गीकार्यं इत्यर्थः। **तद्विशिष्टेति** ॥ तत्पदं गुरुधर्मपरम्।

| | |
|---|---|
| तत्= | कम्बुग्रीवादिमत्वम् |
| तद्विशिष्टः= | घटः |
| तत्सम्बन्धि= | भूतलम् |
| तन्निष्ठोऽभावः= | पटाद्यभावः |
| तदीयाः प्रतियोगिताः= | पटादिनिष्ठाः प्रतियोगिताः |
| तदवच्छेदकाः= | पटत्वादयः |
| तदवच्छेदकत्वाभावकूटवत्= | घटत्वम् |
| तदवच्छिन्नत्वम्= | घटत्वावच्छिन्नत्वं प्रतियोगितायाम्। |

यदभावः गृह्यते तदीय-प्रतियोगितासमनियताः ये केचन धर्माः (लघुर्वा गुरुर्वा) तदवच्छिन्नत्वं प्रतियोगितायाम् उक्तरीत्या सम्भवति इति तात्पर्यम्।

## ॥ गादाधरी ॥

अनुमितिं प्रति च साध्यावच्छिन्नप्रतियोगिताकत्वावगाहिज्ञानमेव कारणं कल्प्यते लाघवात् । न तु साध्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वावगाहिज्ञानमिति, अनुमित्यौपयिकव्याप्तिशरीरे तादृश्येव प्रतियोगिता निवेश्यते । 'कम्बुग्रीवादिमत्त्वान् घटात्' इत्यादौ विशेषदर्शिनामनुमितेः प्रामाणिकत्वे निरुक्तपारिभाषिकावच्छिन्नत्वमेव अनुमित्यौपयिकव्याप्तिघटकम् । तादृशगुरुधर्मावच्छिन्न-साध्यकानुमानस्य केवलान्वयिसाध्यकसमशीलतावादिनस्तु स्वरूपसम्बन्धरूप-मेवावच्छिन्नत्वं व्याप्तिशरीरे निवेशयन्तीति समासः ।

**॥ इति श्रीगदादरभट्टाचार्यविरचिता शिरोमणिकृतव्याप्तिपञ्चकव्याख्याया विवृतिः समाप्ता ॥**

---

**विशेषदर्शिनामिति ॥** प्रतियोगितायाः गुरुधर्मावच्छिन्नत्वं नास्तीति बाधज्ञानवतां इत्यर्थः । तादृशानां तत्र यद्यनुमितिः तर्हि गुरुधर्मावच्छिन्न-साध्यकस्थले व्याप्तिज्ञानार्थम् अगत्या साध्यात्मकगुरुधर्मावच्छिन्नस्य प्रतियोगितावच्छेदकत्वं अवश्यं वक्तव्यम् । तथा च पारिभाषिकं अवच्छिन्नत्वं व्याप्तिशरीरे निवेशनीयमित्यर्थः ।

गुरुधर्मः = कम्बुग्रीवादिमत्वम्
गुरुधर्मावच्छिन्नः = कम्बुग्रीवादिमान् = घटः ।
तदेव साध्यम् यत्र तत्रेत्यर्थः ।

**केवलान्वयिसाध्यकसमशीलतेति ॥** यथा केवलान्वयि-वाच्यत्वादि साध्यके वाच्यत्ववद्भेदः अप्रसिद्धः तथा गुरुधर्मावच्छिन्न-साध्यकेऽपि कम्बुग्रीवादिमदवच्छिन्नप्रतियोगिताकः भेदः अप्रसिद्धः । इयांस्तु विशेषः- यत् तत्र वाच्यत्वस्य केवलान्वयित्वात् तस्य प्रतियोगितायां अनवच्छेदकत्वम् । कम्बुग्रीवादिमतस्तु घटापेक्षया गुरुत्वेन अनवच्छेदकत्वमिति ।

**निवेशयन्तीति** ।। तन्मते पूर्वपक्षव्याप्तेः केवलान्वयिसाध्यके अव्याप्तेर्वक्ष्यमाणतया गुरुधर्मावच्छिन्नसाध्यकेऽपि अव्याप्तिः इष्टैव इति न तत्सङ्ग्रहार्थं पारिभाषिकं अवच्छिन्नत्वं निवेश्यमित्यर्थः ।

**श्री श्रीशस्य कृपासिन्धोः विश्वेशाख्ययतेस्तथा ।**
**करुणादृष्टिपूतेन व्याख्यैषा रचिता मया ।।**

**।। इति पञ्चलक्षणी-गादाधरीव्याख्या ।।**

## ।। अथ जगदीशतर्कालङ्कारकृतं व्याप्तिपञ्चकव्याख्यानम् ।।

*अवतरणिका*

**।। अथ श्रीरघुनाथशिरोमणिविरचितदीधितिः ।।**

समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादन-निदानं व्याप्तिस्वरूपनिरूपणमारभते- **नन्वित्यादिना** ।।

**।। अथ श्रीजगदीशभट्टाचार्यविरचिता व्याख्या ।।**

ननु 'व्याप्तिग्रहोपायश्च वक्ष्यते' इत्युक्तं प्राक्, निरूप्यते च व्याप्तिरित्यर्थान्तरमत आह- **समारब्धेति** ।। समारब्धा या अनुमानप्रामाण्यपरीक्षा= परमतनिराकरणपूर्वकं स्वमतेन अनुमानप्रामाण्यसाधनं, तत्कारणीभूतो यो व्याप्तिग्रहः, तदुपायप्रतिपादनतन्निदानं व्याप्तिस्वरूपनिरूपणमित्यर्थः । व्याप्तिज्ञानं विना 'अयं व्याप्तिग्रहोपायः' इति ज्ञातुमशक्यत्वाद्, व्याप्तेस्तत्र विशेषणत्वादिति भावः । तथाच व्याप्तिग्रहोपायाभिधानोपयुक्तत्वेन तन्निरूपणमिति हृदयम् ।

---

**।। श्रीविश्वेशतीर्थश्रीपादानां शिष्यवरेण हरिदासभट्टेन विरचितम् जागदीशीटीकाव्याख्यानम् ।।**

**अशक्यत्वादिति** ।। 'व्याप्तिग्रहोपाये' विशेषणतया प्रविष्टायाः व्याप्तेः ज्ञानं व्याप्तिग्रहोपायज्ञाने कारणं इत्यर्थः ।

*प्रथमलक्षणम् -*

## ॥ दीधितिः ॥

साध्याभाववदवृत्तित्वस्याव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह- **साध्यवद्भिन्नेति ॥**

## ॥ जागदीशी ॥

**अव्याप्यवृत्तीति**॥ 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यादावित्यर्थः। इदं च येन सम्बन्धेन, येन रूपेण च साध्यत्वं तदवच्छिन्नस्य साध्याभावस्य प्रवेशमादृत्य। अन्यथा तु व्याप्यवृत्तिसाध्यकेऽपि विशिष्टाभावादिकमादाय दोषो बोध्यः।

अव्याप्यवृत्तिसाध्यकेऽपि आकाशादिहेतावव्याप्त्यभावादाह - **सद्धेताविति ॥** वृत्तिमद्धेतौ इति तदर्थः। अव्याप्यवृत्ति साध्यं यत्र तत्र सन् वर्तमानो यो हेतुस्तत्रेत्यर्थः। तेन 'संयोगाभाववान् गुणत्वात्' इत्यादावव्याप्त्यभावेऽपि न क्षतिरिति वदन्ति।

---

**येन सम्बन्धेनेत्यादि ॥** साध्याभावः साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्न-प्रतियोगिताकत्वेन विशेषणीय इत्यर्थः।

**विशिष्टाभावादिकमिति ॥** व्याप्यवृत्तिसाध्यकेपि 'वह्निमान् धूमात्' इत्यादौ पूर्वक्षणवृत्तित्वविशिष्टवह्न्यभावम्, समवायेन वह्न्यभावं वादाय अव्याप्तेः सम्भवात् मूले 'अव्याप्यवृत्तिसाध्यक' इति विशेषणं व्यर्थं स्यात् इत्यर्थः। **प्रवेशमादृत्येति ॥** तादृशाभावयोः क्रमेण साध्यतावच्छेदकधर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोरभावात् नाव्याप्तिरित्यर्थः।

**वदन्तीति ॥** 'संयोगाभाववान् गुणत्वात्' इति हेतुरपि अव्याप्यवृत्तिसाध्यक-सद्धेतुः। परन्तु तत्र नाव्याप्तिः। संयोगरूपस्य साध्याभावस्याधिकरणे द्रव्ये गुणत्व-स्यावृत्तित्वात्। गुणत्वाधिकरणस्य च साध्याभावानधिकरणत्वात्। अतः मूलोक्तं अयुक्तं स्यात्। 'साध्यं यत्र अव्याप्यवृत्ति तत्र (सन्) विद्यमानो हेतुः' इत्यर्थकरणे च न मूलोक्तस्यासाधुत्वम्। साध्यं= संयोगाभावः। स च द्रव्ये एव अव्याप्यवृत्तिः। तत्र विद्यमानो हेतुः वृक्षत्वादिः, न तु गुणत्वम्। अतः गुणत्वहेतौ अव्याप्त्यभावेऽपि न क्षतिः।

*द्वितीयलक्षणम्-*

**॥ दीधितिः ॥**

साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमर्थः ।

**॥ जागदीशी ॥**

ननु 'साध्यवद्भिन्नो यः साध्याभाववान्' इत्यर्थे साध्याभाववत्पदवैयर्थ्यम्। साध्यवद्भिन्नाऽवृत्तित्वमित्यस्यैव सम्यक्त्वात्। न चाऽवृत्तित्वेन समं साध्यवद्भिन्नस्याऽन्वयाऽविवक्षणात्, साध्याभाववता सममेव तादात्म्येनाऽन्वयविवक्षणान्न वैयर्थ्यमिति वाच्यम् । तथापि साध्यवद्भिन्नात्मको यो मतुबर्थः सम्बन्धी तदवृत्तित्वस्यैव सम्यक्त्वे साध्याभावपदवैयर्थ्यध्रौव्यात् । अतः सप्तमीसमासं समर्थ्य व्याचष्टे- **साध्यवद्भिन्ने इति** ॥ तथाच साध्यवद्भिन्नस्य वृत्तावन्वयाद् यथासन्निवेशे न वैयर्थ्यम् । साध्याभावे साध्यवद्भिन्नवृत्तित्वविशेषणन्तु अव्याप्यवृत्तिसाध्यकसङ्ग्रहार्थमेव इत्याशयः।

साध्यवद्भिन्नवृत्तिद्रव्यत्वादिमति पर्वतादौ धूमादेः सत्त्वात् अव्याप्तिः

---

**न वैयर्थ्यमिति** ॥ साध्यवद्भिन्नपदार्थस्य अवृत्तिपदार्थेन सह अन्वयविवक्षायामेव साध्यवद्भिन्नावृत्तित्वांशस्य 'साध्यवद्भिन्न-साध्याभाववदवृत्तित्वम्' इति लक्षणघटकत्वं सम्भवति। तथा सति च 'घटकस्यैव लक्षणत्वे घटितस्य न लक्षणत्वम्' इति न्यायप्रसरः। तस्य अवृत्तिपदार्थेन अनन्वये च न तयोः लक्षणयोः घटितघटकभावः। तेन च लक्षणस्य लक्षणान्तरेण न वैयर्थ्यशङ्कावकाशः ।

**वृत्तौ अन्वयादिति** ॥ अवृत्तिपदार्थघटकवृत्तौ, अन्वयाभावात्। सप्तम्यर्थाधेयतायामेव अन्वयादित्यर्थः । **न वैयर्थ्यमिति** ॥ अवृत्तिपदार्थघटकवृत्तौ अन्वये एव साध्याभावपदवैयर्थ्यावकाशः । न तु सप्तम्यर्थेऽन्वये । स्वसमनियतलघुधर्मान्तरघटितत्वमेव हि वैयर्थ्यम्। पूर्वोक्तरीत्या आधेयतायाम् अन्वये च लक्षणवाक्यलभ्यार्थे साध्यवद्भिन्नावृत्तित्वस्य अघटकत्वात् न साध्याभावपदवैयर्थ्यम्।

## ॥ जागदीशी ॥

असम्भवो वा स्यादतः **साध्याभावेति।** न च 'कपिसंयोगी एतत्वात्' इत्यादेः सङ्ग्रहार्थमधिकरणभेदेनाऽभावभेदमादृत्यैव लक्षणमिदं कार्यम्, तथा च 'साध्यवद्भिन्ने योऽभावस्तद्वदवृत्तित्वस्यैव' सम्यक्त्वे साध्यपदवैयर्थ्यमिति वाच्यम्। प्रतियोगितासंसर्गेण साध्यीयत्वेनैव साध्याभावस्य प्रवेशो न त्वभावत्वेनाऽपीति तद्वैयर्थ्यशङ्काऽनवकाशात्।

वस्तुतः, स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्ने वर्तते यः साध्यतावच्छेदकसम्बन्धेन साध्यीयोऽभावस्तद्वदवृत्तित्वमर्थः । तथा च साध्यतावच्छेदकसम्बन्धेन साध्यीयत्वार्थकस्य साध्यपदस्याऽनुक्तौ स्वप्रतियोगितावच्छेदकीभूतसमवायादिसम्बन्धेन वह्न्यादिमतोऽन्यस्मिन्पर्वतादौ यः समवायादिसम्बन्धावच्छिन्नवह्न्यभावः तद्वति धूमादेः सत्त्वादव्याप्तिः स्यात्। अतस्तदुपात्तमिति नव्याः ।

---

**अव्याप्तिः असम्भवो वेति ॥** अवृत्तिगगनादिहेतुकानुमाने लक्षणगमनात् अव्याप्तिः। गगनहेतुकानुमानस्य असद्धेतुत्वे असम्भवः।

**साध्यीयत्वेनैवेति ॥** 'साध्यवद्भिन्नवृत्तिः यः साध्यीयः तद्वदवृत्तित्वम्' इति लक्षणम्। अत्र साध्याभावः साध्यीयत्वेन (साध्यसम्बन्धित्वेनैव) प्रविष्टः । न तु साध्याभावत्वेन । इत्थञ्च अभावपदं लक्षणे नास्त्येव येन 'अभावमात्रनिवेशेनैव सामञ्जस्ये साध्यपदं व्यर्थम्' इति शङ्का स्यात्।

**स्वप्रतियोगितावच्छेदकेति ॥** स्वं= साध्याभावः। तत्प्रतियोगितावच्छेदकसम्बन्धेन यः साध्यवान्, तद्भिन्ने इत्यर्थः। भेदप्रतियोगितावच्छेदकतायां साध्याभावप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वं निवेश्यं इति यावत्। साध्याभावप्रतियोगितावच्छेदकश्च साध्यतावच्छेदकसम्बन्ध एव ग्राह्य इति च साध्यपदेन लभ्यते। तेन 'समवायेन वह्निमान् न' इति भेदस्य निरासः। अस्मिंश्च पक्षे, लक्षणे साध्याभावत्वेनैव साध्याभावस्य निवेशः। साध्याभावीयप्रतियोगितायां सम्बन्धविशेषलाभार्थं साध्यपदम्।

## ॥ जागदीशी ॥

केचित्तु व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वरूपविरुद्धधर्माध्यासात् संयोगाद्य-भावस्यैव द्रव्यगुणाद्यधिकरणभेदेन भेदो, न तु गगनाद्यभावस्य, मानाभावात्। तथाच साध्यवद्भिन्नवृत्तिगगनाद्यभाववति पर्वतादौ धूमादेः सत्त्वात् अव्याप्तिः। अतः साध्यपदमित्याहुः। तन्मन्दम्। 'गुणे गगनाद्यभावे गुणत्वादिसामानाधि-करण्यम्, न तु द्रव्ये गगनाद्यभावे तथात्वम्' इत्यादिप्रतीत्या गगनाद्यभावस्यापि गुणत्वादिसामानाधिकरण्यतदभावयोः विरुद्धधर्मयोः सम्भवादिति दिक्।

न च 'घटत्व-घटाकाशसंयोगान्यतरत्वावच्छिन्नाभाववान् गगनत्वात्' इत्यत्राव्याप्तिः। साध्यवद्भिन्ने घटे वर्तमानस्य गगनघटसंयोगात्मकस्य साध्या-भावस्य अधिकरणे गगनत्वहेतोः सत्त्वादिति वाच्यम्। अभावाभावस्याति-रिक्ततामते एव एतल्लक्षणकरणादिति भावः।

---

**केचित्तु इति ॥** मथुरानाथादयः। जगदीशेन मथुरानाथस्य पक्षः तन्मन्दमिति निराकृतः। गदाधरस्तु तं पक्षं समर्थयति। व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोरेव अभावभेदकत्वं दीधितिकारसम्मतम्। तच्च 'एतानि च न भेदकानि' इति पूर्वपक्षग्रन्थेन ज्ञायते। व्याप्याव्याप्यवृत्तित्वयोरपि विरोधः परस्परं भावाभावरूपत्वेन। यदि च प्रतियोग्यनधिकरणवृत्तित्वं व्याप्यवृत्तित्वं प्रतियोग्यधिकरणवृत्तित्वं अव्याप्यवृत्तित्वम् इत्यङ्गीक्रियते तर्हि न तयोरपि विरोधः। किं पुनः गुणत्वसामानाधिकरण्य-तदसामा-नाधिकरण्ययोः। तस्मात् गगनाभावस्य ऐक्यात् स्यादेव अव्याप्तिः। तद्वारणाय च साध्यपदम् सार्थकं इति गदाधरोऽपि मथुरानाथं अनुवर्तते।

**न च घटत्व-घटाकाशसंयोगेत्यादि ॥** अस्य विवरणं गादाधरीव्याख्यायां द्रष्टव्यम्। अयमत्र विशेषः- जगदीशः अभावाभावः न भावरूपः, किन्तु अतिरिक्तः इति मतमवलम्ब्य अत्र अव्याप्तिं परिजहार। परन्तु तथाङ्गीकारेणैव द्वितीयलक्षणं प्रवृत्तं इत्यत्र नास्ति विनिगमकं किञ्चित्। अतः गदाधरः 'व्याप्याव्याप्यवृत्तित्वयोः समावेशः अभावभेदकः' इति द्वितीयलक्षणे अवश्यं अभ्युपेयं पक्षं अवलम्ब्य उक्तान्य-तराभावाभावस्य संयोगस्वरूपत्वं निराकृत्य अव्याप्तिं परिहृतवान्।

**तृतीयलक्षणम्-**

**॥ दीधितिः ॥**

कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह-**साध्यवदिति** ॥

**॥ जागदीशी ॥**

**भिन्नत्वे इति** ॥ द्रव्यनिष्ठसंयोगाभावतो भिन्नत्वे इत्यर्थः। **मानाभावादिति** ॥ तथा चात्राव्याप्यवृत्तिसाध्यकसद्धेतौ अव्याप्तिरिति भावः।

**॥ दीधितिः ॥**

हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह- **सकलेति** ॥

**॥ जागदीशी ॥**

**हेतोरिति** ॥ न च साध्यवत्प्रतियोगिकाऽन्योन्याभावस्य केवलान्वयित्वात् असम्भव एव वक्तुमुचितो नाऽव्याप्तिरिति वाच्यम्। 'वह्निमान् गगनात्' इत्यत्राऽवृत्तिगगनादौ लक्षणसम्भवेन तस्यापि सद्धेतुतायाः स्वयं वक्ष्यमाणत्वादिति भावः।

साध्यपदस्य सिद्धिकर्म-तत्तद्व्यक्तिपरतया तत्तद्व्यक्त्यवच्छिन्नान्योन्याभावासामानाधिकरण्यरूपस्य 'द्रव्यं पृथिवीत्वात्' इत्यादौ एव सम्भवाद् 'गन्धवती पृथिवीत्वात्' इत्यादौ अव्याप्तिकथनमित्यपि वदन्ति।

---

**मूले कर्मादाविति** ॥ कर्मणः आदिः = गुणः। अथवा कर्मपदं द्रव्यभिन्नलक्षकम्। तेन प्रथमातिरेके मानाभावात् 'गुणादौ' इत्येव वक्तव्ये 'कर्मादौ' इति कथनस्य नासामञ्जस्यम्।

**केवलान्वयित्वादिति** ॥ वह्निमद्-घटोभयभेदस्यापि साध्यवत्प्रतियोगिकतया तस्य केवलान्वयित्वात् इति भावः।

**वक्ष्यमाणत्वादिति** ॥ सव्यभिचारप्रकरणे असाधारणरूपहेत्वाभासनिरूपणावसरे दीधिकारेणेत्यर्थः।

**सिद्धिकर्मेति** ॥ सिद्धिः= अनुमितिः। तद्विषयत्वं तत्कर्मत्वम्। एवं सति

***चतुर्थलक्षणम्-***

**॥ दीधितिः ॥**

साकल्यं साध्याभाववति साध्ये च बोध्यम् ।

**॥ जागदीशी ॥**

ननु सकलस्य साध्यप्रतियोगिकाभावस्याऽधिकरणाऽप्रसिद्ध्या व्यभिचारिणि अतिव्याप्तिवारणार्थं यदि साध्याभावस्य विशेषणं साकल्यम्, तदा **'वह्निमान् धूमात्'** इत्यादिसद्धेतावव्याप्तिः । तत्रापि तत्तद्विपक्षाऽवृत्तित्वावच्छिन्नाभावरूपस्य तत्तत्सपक्षवृत्तित्वावच्छिन्नाभावरूपस्य च साध्यप्रतियोगिकाभावस्तोमस्याऽधिकरणाऽप्रसिद्धेः । अत आह- **साकल्यं साध्याभाववतीति ॥** तथाच साकल्यं न साध्याभावविशेषणम् । अतो नाऽप्रसिद्धिरिति भावः ।

---

नानाव्यक्तिसाध्यके एव अव्याप्तिः । द्रव्यत्वादिरूप एकव्यक्तिसाध्यके उभयाभावस्य, विशिष्टाभावस्य वा अतादृशत्वात् द्रव्यत्वरूपतद्व्यक्त्यवच्छिन्नभेद एव ग्राह्यः । तस्य च अधिकरणं अद्रव्यमिति नाव्याप्तिः ।

**गन्धवतीति ॥** अत्र तद्व्यक्तिपदेन घटगतगन्धः गृह्यते । तदवच्छिन्नभेदः पटे । तत्र च पृथिवीत्वमस्तीति अव्याप्तिः। वह्निसाध्यके हेतोरपि सखण्डतया तत्तद्धेतोः तत्र तत्र असामानाधिकरण्यं सम्भवत्येवेति अखण्डपृथिवीत्वहेतुकानुधावनम्।

**नन्विति ॥** साकल्यविशेषणासत्वे 'धूमवान् वह्नेः' इत्यत्र अतिव्याप्तिः । तत्रापि साध्याभावाधिकरणे ह्रदे वह्नेः असत्वात् । तद्वारणाय साध्याभावे साकल्यं विशेषणीयम् । एवं सति नातिव्याप्तिः । तत्र सकले ये साध्याभावाः= तत्तद्विपक्षावृत्तिः नास्तीत्यादयः अभावाः, तेषां सर्वेषां अभावानां अधिकरणं एकं अप्रसिद्धम् । अतः नातिव्याप्तिः । अथापि वह्निसाध्यक-सद्धेतौ अव्याप्तिः । तत्रापि साध्यप्रतियोगिकाभावपदेन 'महानसवृत्तिः (महानसीयवह्निः) नास्ति' 'ह्रदावृत्तिः नास्ति' इत्याद्या अभावाः सङ्गृह्यन्ते । तत्तद्विपक्षावृत्त्यभावानां च ह्रदत्वादिरूपतया सर्वेषां एकं अधिकरणं अप्रसिद्धम् । अतः अव्याप्तिः इत्यर्थः ।

जागदीश्यां 'अधिकरणाप्रसिद्ध्या' इत्येतत् 'अतिव्याप्तिवारणे' अन्वेति ।

## ॥ जागदीशी ॥

केचित्तु, ननु 'धूमवान् वह्नेः' इत्यादौ व्यभिचारिणि अतिव्याप्तिः। साध्याभाववद्यत्किञ्चिन्निष्ठाभावप्रतियोगित्वात् इत्यत आह- **साकल्यं साध्याभाववतीति** आहुः।

नन्वेवमपि साध्याभाववन्निखिलान्तर्गते महानसादौ वर्तमानस्याऽभावस्य प्रतियोगित्वं धूमादौ नास्तीति अव्याप्तितादवस्थ्यमत उक्तम्- **साध्ये चेति ॥** तथा च सपक्षो महानसादिर्न सकलसाध्याभाववानित्यदोषः।

प्राञ्चस्तु, व्यभिचारिणि अतिव्याप्तिवारणार्थं साध्याभाववति यावत्त्वविशेषणे दत्ते एव साध्ये यावत्त्वमव्याप्तिवारकतया सार्थकं भवति। अतः साध्याभाववत्येव साकल्यं प्राक् योजयति 'साकल्यम्' इत्यादिना इत्येवमवतारयन्ति। तन्मन्दम्। साध्याभाववति साकल्यानुक्तौ अतिव्याप्तिवारकतयैव साकल्यविशेषणस्य सार्थक्यसम्भवात्। अन्यथा 'गगनाऽवृत्तिधर्मवान् द्रव्यत्वात्' इत्यादौ पटत्वादिलक्षणतत्तत्साध्यव्यक्त्यभाववद्गुणादिनिष्ठ-अभावप्रतियोगिनि द्रव्यत्वादावतिप्रसङ्गादिति ध्येयम्। इत्थं च प्रथमतः साध्ये साकल्यविशेषणोपादाने गुणत्वादेरपि सङ्ग्रहात्तदभाववान् न गुणादिः। किन्तु गगनमात्रं तत्र हेतोर्वृत्तित्वान्नातिव्याप्तिः।

---

वस्तुतः साकल्यस्य साध्याभावविशेषणत्वे धूमसाध्यके अतिव्याप्तिः गदाधरेण समर्थिता। तत्र साध्यतावच्छेदकसंयोगसम्बन्धेन गुणे कस्यापि असत्वात् गुणः एव सकलसाध्याभावानां अधिकरणं भवतीति। अथापि साध्याभावीयप्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वं अनिवेश्य जगदीशेन अप्रसिद्ध्या अतिव्याप्तिः परिहृता इति विभावनीयम्।

**केचित्तु इति ॥** जगदीशः साध्याभावे साकल्यविशेषणभ्रमेण अव्याप्तिशङ्कायां तत् परिहारपरत्वेन 'साकल्यम्' इत्यादि दीधितिग्रन्थं अवतारयामास। केचित्कारास्तु साध्याभाववति साकल्यस्य अनिवेशे अतिव्याप्तिशङ्कायां तन्निरासपरतया दीधितिग्रन्थं व्याख्यास्यन्ति इति विशेषः।

**गगनावृत्तिधर्मवानिति ॥** द्रव्यत्ववति गगने तदवृत्तिधर्मः नास्तीति व्यभिचरितमिदं अनुमानम्। साध्ये साकल्यासत्वे अत्र अतिव्याप्तिः। साध्यं= गगनावृत्तिः

### ॥ दीधितिः ॥

साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः ।

### ॥ जागदीशी ॥

ननु साध्यवत्यपि द्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य सकलसाध्यप्रतियोगिकाऽभावस्य सत्त्वादसम्भवः । किञ्च, सकलपदोत्तरसाध्यनाम्ना सकलसाध्यप्रतियोगिताकाऽभाववतोऽनुपस्थापनात् तेन समं सकलपदस्य कर्मधारयोऽप्यनुपपन्न इत्यत आह- **साध्याभावो वेति** ॥ तथा च साध्याभाववत्येव साकल्यं देयं न तु साध्येऽपीति भावः ।

### ॥ दीधितिः ॥

तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः। न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः ।

### ॥ जागदीशी ॥

साध्याभाववति साकल्यदानस्य प्रयोजनमाह- **तेनेति** ॥ विपक्षैकदेशः कश्चिद् विपक्षः । साध्यनिष्ठसाकल्यस्य साध्यसामान्याभावस्य वा निवेशस्य फलमाह- **नवेति** ॥ एकव्यक्तिसाध्यके सकलसाध्योक्तौ अपि अव्याप्तिरग्रे स्थास्यतीत्याशयेन नानेत्युक्तम् ।

---

कश्चन धर्मः= पटत्वम् । तदभाववान्= गुणः । तत्र हेतुः नास्तीति । साध्ये साकल्यविशेषणसत्वे तु गगनावृत्ति यावद्धर्मेषु गुणत्वमपि अन्तर्भवति । तेषां सर्वेषां अभावः गगने एव इति अतिव्याप्तेः परिहारः ।

गदाधरः एवंविधातिव्याप्तिपरिहारः न साध्ये साकल्यस्य वास्तवं प्रयोजनम् इति निराचकारेति अत्र स्मर्तव्यम् ।

**सकलपदोत्तरसाध्यनाम्नेति** ॥ यस्य पदार्थस्य येन पदार्थेन सह अभेदान्वयः विवक्षितः तयोरेव पदयोः कर्मधारयः । यदि सकलपदार्थस्य साध्याभाववता साकं

## ॥ जागदीशी ॥

न चैकव्यक्तिसाध्यकस्थलेऽपि द्वित्वाद्यवच्छिन्नाभावमादायासम्भव एव सम्भवति, न त्वव्याप्तिरिति वाच्यम्। व्यासज्यवृत्तिधर्मानवच्छिन्नत्वविशेषणेनैव तद्वारणसम्भवात् ।

## ॥ दीधितिः ॥

अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेः व्यभिचारिणि चाव्याप्यवृत्तौ अतिव्याप्तेर्वारणाय अभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यम् ।

## ॥ जागदीशी ॥

**अव्याप्यवृत्तीति** ॥ कपिसंयोगी एतत्त्वादित्यादावित्यर्थः । यद्यप्यग्रे हेत्वभावस्यापि प्रतियोगिवैयधिकरण्यावच्छिन्नस्यैव निवेशः करणीय इति अव्याप्यवृत्तिहेतावपि अव्याप्तिः सम्भवति, तथापि यथाश्रुतमूलस्य न तत्राऽव्याप्तिरित्याशयः। अव्याप्यवृत्तिहेतूक्तिः। **व्यभिचारिणीति** ॥ 'एतद्वृक्षत्ववान् कपिसंयोगात्' इत्यादावित्यर्थः। **अभावद्वये इति** ॥ साध्याभावे हेत्वभावे चेत्यर्थः।

अत्रच साध्याभावे प्रतियोगिवैयधिकरण्यं साध्यतावच्छेदकसम्बन्धेन प्रतियोगिनो यदनधिकरणं तद्वृत्तित्वम्। तेन धूमाद्यभाववतोऽपि अयःपिण्डादेः कालिकसम्बन्धेन धूमादिमत्त्वेऽपि नातिव्याप्तिः । हेत्वभावे प्रतियोगि-

---

अन्वयः विवक्षितः तर्हि तत्पदेनैव साकं कर्मधारयः स्यात्। न तु साध्यपदेन। नहि साध्यपदेन साध्याभाववान् उपस्थाप्यते। अतः उभयत्र साकल्यस्यान्वयः क्लिष्टः इति हृदयम्।

**अग्रे स्थास्यतीति** ॥ 'यत्रैकव्यक्तिकं साध्यम्' इत्यादि चतुर्थलक्षण-दूषणाभिधायकदीधितौ इत्यर्थः।

**अव्याप्यवृत्तिहेतौ इति** ॥ 'कपिसंयोगी कपिविभागात्' इत्यादौ। **यथाश्रुत-मूलस्येति** ॥ तत्र हेत्वभावे प्रतियोगिवैयधिकरण्यस्य अनिविष्टत्वात्। **धूमादि-मत्त्वेऽपीति** ॥ तथा च प्रतियोग्यनधिकरण-साध्याभावाधिकरणं परमाण्वादिरेव। तत्र च हेत्वभावः अस्तीति अतिव्याप्तिः।

॥ जागदीशी ॥

वैयधिकरण्यं तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वघटितं वाच्यम्। तेन 'अयमात्मा ज्ञानात्' इत्यादौ साध्याभाववतो घटादेः विषयतया हेत्वभावप्रतियोगिमत्त्वेपि नाव्याप्तिः।

॥ दीधितिः ॥

हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः, तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम्।

॥ जागदीशी ॥

**हेत्वभावोऽपीति** ॥ अपिना साध्याभावसमुच्चयः। तेन 'विशिष्टसत्तावान् जातेः' इत्यादौ नातिव्याप्तिः। यद्यपि साध्याभावोऽपीत्येव क्रमानुरोधाद् वक्तुमुचितम्। अपिशब्दादेव हेत्वभावस्य लाभसम्भवात्। तथापि 'तत्प्रतियोगित्वं च' इत्यग्रेतनतत्पदेन अनिर्दिष्टहेत्वभावपरामर्शाऽसम्भवात्, हेत्वभावप्रतियोगित्वं चेत्यभिधाने च ग्रन्थगौरवं स्यात् इति इत्थमभिधानम्। **प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगीति** ॥ प्रतियोगिपदं प्रतियोगितावच्छेदकताघटकसम्बन्धेन अवच्छेदकस्य वैशिष्ट्यलाभाय। तेन ह्रदादौ कालिकादिसम्बन्धेन धूमत्वाव-

---

**विषयतयेति** ॥ विषयतया ज्ञानस्य केवलान्वयितया प्रतियोग्यनधिकरण-हेत्वभावाधिकरणाप्रसिद्ध्या अव्याप्तिः।

**नातिव्याप्तिरिति** ॥ साध्याभावाधिकरणस्य गुणादेः सत्तारूप-प्रतियोगिनः अधिकरणत्वात् प्रतियोग्यनधिकरण-साध्याभावाधिकरणं सामान्यादिरेव स्यात्। तत्र च हेत्वभावोऽस्तीति अतिव्याप्तिः।

दीधितौ प्रतियोगितावच्छेदकावच्छिन्नानधिकरणेत्युक्त्यैव त्रिवक्षितलाभे प्रतियोगिपदं व्यर्थम्। अतः तदाकूतमाह- **प्रतियोगिपदमिति** ॥

## ॥ जागदीशी ॥

च्छिन्नस्य काष्ठादेः संयोगसम्बन्धेन सत्त्वेऽपि नाव्याप्तिः । **तत्प्रतियोगित्वं** हेत्वभावप्रतियोगित्वम् । **हेतुतावच्छेदकरूपेणेति** ॥ हेतुतावच्छेदक-सम्वन्धेनेत्यपि वोध्यम् ।

---

**काष्ठादेरिति ॥**

प्रतियोगी= धूमः



प्रतियोगिता

(—)

धूमत्वम्

 (कालिकेन)

काष्ठम्

एवञ्च साध्याभावाधिकरणे ह्रदे हेत्वभात्रप्रतियोगितावच्छेदकावच्छिन्नस्य काष्ठस्य सत्वात् प्रतियोगिव्यधिकरणः हेत्वभावः ह्रदे नास्तीति अव्याप्तिः । प्रकृते 'धूमः नास्ति' इत्यभावपरिग्रहे प्रतियोगितावच्छेदकतावच्छेदकसम्वन्धः समवायः -

अभावः= 'धूमत्व विशिष्ट धूमः नास्ति'

समवायः



धूमः



प्रतियोगिता

(—)

धूमत्वम्



अवच्छेदकता

(—)

समवायः ।

## ॥ जागदीशी ॥

तेन 'आत्मभिन्नं द्रव्यत्वात्' इत्यादौ साध्याभाववति आत्मनि वर्तमानस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणस्य कालिकादिसम्बन्धावच्छिन्नद्रव्यत्वत्वावच्छिन्नाभावस्य प्रतियोगित्वेऽपि द्रव्यत्वस्य नातिव्याप्तिः।

न च हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्योक्त्यैव अतिव्याप्तिवारणसम्भवात् हेतुवावच्छेदकसम्बन्धेन प्रतियोगित्वविवक्षा व्यर्थेति वाच्यम्। तथासति 'निर्धूमत्वव्याप्यवान् निर्वह्नित्वात्' इत्यादौ निर्वह्नित्वभेदमादाय लक्षणसम्भवे 'निर्धूमत्वव्याप्य' इत्याद्युत्तरग्रन्थे वक्ष्यमाणाऽव्याप्त्यलग्नकतापत्तेरिति ध्येयम्।

---

तथा च प्रतियोगितावच्छेदकतावच्छेदकेन समवायेन धूमत्वविशिष्टः धूम एव भवति। न तु काष्ठादिः। अतः नाव्याप्तिः।

**आत्मभिन्नं द्रव्यत्वादिति** ॥ दुष्टमिदं अनुमानम् -




अत्रातिव्याप्तिः। साध्याभाववति आत्मनि कालिकसम्बन्धेन हेतोः द्रव्यत्वस्य असत्वात्। प्रतियोगितावच्छेदकीभूतकालिकसम्बन्धेन प्रतियोगिनः अनधिकरणत्वाच्च आत्मनः। तत्परिहाराय प्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं देयम्। प्रकृते च स सम्बन्धः समवायः। तेन सम्बन्धेन द्रव्यत्वाभावः नात्मनि विद्यते इति नातिव्याप्तिः।

**अलग्नकतापत्तेः इति** ॥ हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशे हेत्वभावीयप्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वनिवेशः विफलः। समवायादिसम्बन्धान्तरावच्छिन्न-प्रतियोगिताकाभावस्य हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यविरहादेव अतिव्याप्तिपरिहारात्। तथा च निर्धूमत्वव्याप्यसाध्यके हेतुभेदोऽपि लक्षणघटकः भवति। स च सकलविपक्षवृत्तिः, अनुगत इति चतुर्थलक्षणस्य दीधितिकारोक्ता अव्याप्तिः असङ्गता स्यात्।

**।। जागदीशी ।।**

वस्तुतो निर्वह्नित्वस्य व्याप्यवृत्तितया तद्धेतुस्थले हेत्वभावे प्रतियोगि-व्यधिकरणत्वं न देयं व्यर्थत्वात्, परन्तु हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं वाच्यम्, अतो नाग्रिमग्रन्थाऽसङ्गतिरिति ध्येयम् ।

**।। दीधितिः ।।**

तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाव्याप्तिः । न वा विशिष्ट-सत्तात्वादिना तादृशाभावप्रतियोगिनि सत्तादावतिप्रसङ्गः ।

**।। जागदीशी ।।**

हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिवैयधिकरण्यविवक्षायाः फलमाह- **तेन द्रव्यत्वादाविति** ।। अन्यथा साध्याभाववति गुणादौ विशिष्ट-सत्ताभावस्य सत्तारूपप्रतियोगिसमानाधिकरणत्वात् अव्याप्तिरेव स्यादिति भावः । अत्र द्रव्यत्वस्य साध्यतायां सकलसाध्याऽप्रसिद्ध्या अव्याप्तेरुक्त-विवक्षयाऽपि अप्रतीकारात् आदिपदम् । तेन गुणवत्त्वादिसाध्यस्योपसङ्ग्रहः। द्रव्येतराऽसमवेतमात्रं वा प्रकृते द्रव्यत्वमिति ध्येयम् ।

हेतुतावच्छेदकरूपेण हेत्वभावप्रतियोगित्वविवक्षायाः फलमाह- **नवेति ।। सत्तादाविति** ।। द्रव्यत्वादौ साध्ये इत्यनुवर्तते।

---

नहि ग्रन्थासङ्गतिभिया लाघवं उपेक्षणीयम् । अतः कल्पान्तरमाह- **वस्तुत इति** ।। **हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वमिति** ।। हेत्वभावीयप्रतियोगितायां इत्यादिः । तथा च वह्न्यभावहेतुके हेतुभेदः न लक्षणघटक इति उपपद्यते अव्याप्तिः ।

**अप्रतीकारात् इति** ।। हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधि-करण्यनिवेशेऽपि साध्यस्य एकत्वेन साकल्यासम्भवात् अव्याप्तेः दुरुद्धरत्वादित्यर्थः।

ननु गुणवत्त्वं गुणाधिकरणता । सा चैका इति पुनः साकल्याप्रसिद्धिः । अत आह- **द्रव्येतरासमवेतमात्रमिति** ।। द्रव्यत्वं= द्रव्येतरासमवेतं सकलद्रव्यसमवे-

॥ दीधितिः ॥

यत्रैकव्यक्तिकं साध्यम्, विपक्षो वा तत्र, निर्धूमत्वादिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिः । तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षाऽवृत्तित्वादत आह- **साध्यवदिति** ॥

॥ जागदीशी ॥

**यत्रैकव्यक्तिकमिति** ॥ तथा च 'द्रव्यं पृथिवीत्वात्' इत्यादावव्याप्तिः, सकलसाध्याऽप्रसिद्धेरित्यर्थः ।

ननु इतोऽप्यस्वरसात् साध्यसामान्याभावस्यैव निवेशितत्वात् साध्ये साकल्यं न देयमेवेत्यत आह- **विपक्षो वेति** ॥ एकव्यक्तिक इत्यनुषज्यते । तथा च यत्रैकव्यक्तिरेव साध्याभाववती तत्र, 'तद्घटावृत्तिधर्मवान् तद्घटान्यत्वात्' इत्यादावव्याप्तिः, साध्याभाववतः साकल्याऽप्रसिद्धेरित्यर्थः ।

साध्याभाववन्निष्ठान्योन्याभाव-प्रतियोगितानवच्छेदकीभूताभावप्रतियोगित्वं वक्तव्यमतो दोषान्तरमाह- **निर्धूमेति** केचित् ॥

---

तम् । प्रकृते च द्रव्यत्वपदस्य लक्षणया द्रव्येतरासमवेतम् इत्येवार्थः । तादृशः गुणः, कर्म, द्रव्यत्वं च भवति । तथा च नैकव्यक्तिसाध्यकत्वम् ।

**तद्घटावृत्तिधर्मवानिति** ॥ तादृशाश्च पटत्वादयः । हेतुमति तद्घटभिन्ने पटादौ तादृशधर्मः अस्तीति सद्धेतुरयम् । गदाधरः 'तद्घटभिन्नं पटत्वात्' इत्युदाहरणं प्रदर्शयति । तत्र साध्यस्य एकव्यक्तिकत्वम् । जगदीशोक्तानुमाने तु नैवमिति विशेषः ।

**साध्याभाववन्निष्ठेति** ॥ साध्याभाववति निविष्टस्य साकल्यस्य व्यापकत्वमर्थः । न तु अनेकत्वे सति अशेषत्वं साकल्यम् । येनात्र तादृशम् अप्रसिद्धं स्यात् । तथा च साध्याभाव-व्यापकीभूतः यः हेत्वभावः तत्प्रतियोगित्वं चतुर्थलक्षणार्थः । व्यापकत्वं च अन्योन्याभावघटितम् । तच्च तदधिकरणनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपम् । तत्पदेन च साध्याभावः ग्राह्यः ।

**॥ जागदीशी ॥**

ननु साध्यादिभेदेन व्याप्तेर्भेदात् यत्रैक एव विपक्षः तत्रत्यलक्षणे साध्याभाववति साकल्यविशेषणं न देयम्, अशेषत्वरूपं वा साकल्यं निवेश्यमतो दोषान्तरमाह- **निर्धूमत्वव्याप्ये इति ॥** निर्धूमत्वस्य साध्यत्वे यत्रैकव्यक्तिकमित्यनेनैव गतार्थता स्यादतो व्याप्यपर्यन्तम्। निर्धूमत्वव्याप्यस्यापि स्नेहत्वादिना साध्यत्वे वह्न्यभावस्य व्यभिचारित्वात् असङ्गहो न दोषायेत्यत उक्तम्- **तत्त्वेन साध्ये इति ॥** निर्धूमत्व-व्याप्यत्वेन साध्ये इत्यर्थः। **प्रत्येकमिति ॥** तथा च हेत्वभावस्य महानसीयवह्नेः साध्याभाववत्सकलान्तर्गतपर्वताद्यवृत्तित्वात् अव्याप्तिरिति भावः।

अत्र निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्न-साध्याभावव्यापकतावच्छेदकं निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्न-यद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं व्याप्तिरित्युक्तौ तु न दोष इति ध्येयम्।

**॥ दीधितिः ॥**

अत्राऽन्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्ति-बललभ्यम्।

**॥ जागदीशी ॥**

ननु साध्यवत्प्रतियोगिकान्यत्वस्य धूमादिमति सत्त्वादव्याप्तिरत आह- **अत्रेति ॥** तथाच साध्यवत्पदेन निरूढलक्षणया उपस्थापितस्य साध्यता-वच्छेदकविशिष्टसाध्यवत्त्वावच्छिन्नप्रतियोगिताकस्य अन्यपदार्थैकदेशे अन्यत्वे तादात्म्येन अन्वयात्, साध्यवति च विशिष्टसाध्यवत्त्वावच्छिन्न-प्रतियोगि-ताकभेदाऽसत्त्वात् नाव्याप्तिः।

---

**निरुक्तेति ॥** साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्येत्यर्थः। **निरुक्तेति ॥** प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेद-कावच्छिन्नेत्यर्थः। हेत्वभावत्वं साध्याभावव्यापकतावच्छेदकं स्यादिति लक्षणस्य पर्यवसितार्थः। यथा वह्नेः अननुगमेऽपि वह्नित्वं धूमव्यापकतावच्छेदकं भवति एवं वह्न्यभावभावस्य अननुगमेऽपि वह्न्यभावाभावत्वं व्यापकतावच्छेदकं भवत्येवेति यद्रूपपदेन हेतुतावच्छेदकं वह्न्यभावत्वं (निर्वह्नित्वत्वम्) गृहीतुं शक्यते इति नाव्याप्तिरित्यर्थः। अयं पक्षः गदाधरेण निराकृत इति स्मर्तव्यम्।

## ॥ जागदीशी ॥

गुरुधर्मस्याऽवच्छेदकत्वोपगमाच्च 'द्रव्यं पृथिवीत्वात्' इत्यादौ द्रव्यत्वत्व-विशिष्टद्रव्यत्वावच्छिन्नभेदाऽप्रसिद्ध्या नाऽव्याप्तिरिति भावः ।

---

**गुरुधर्मस्यावच्छेदकत्वोपगमाच्चेति ॥** महानसीयवह्निमद् भेदमादाय अव्याप्तेः वारणाय साध्यनिष्ठ-भेदप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकावच्छिन्नत्व-विशेषणं देयम् । एवं सति 'द्रव्यं पृथिवीत्वात्' इत्यत्र तादृशः भेदः- 'द्रव्यत्ववन्न' इत्याकारकः । तस्य च प्रतियोगि द्रव्यत्ववत् । प्रतियोगितावच्छेदकं द्रव्यत्वम् । अवच्छेदकता द्रव्यत्वनिष्ठा । अवच्छेदकतायां च द्रव्यत्वत्वं अवच्छेदकम् । तच्च साध्यतावच्छेदकम् । तथा च साध्यतावच्छेदकीभूतद्रव्यत्वत्वावच्छिन्ना या द्रव्यत्वनिष्ठा अवच्छेदकता तन्निरूपिता या द्रव्यनिष्ठा प्रतियोगिता तन्निरूपकः भेदः ग्राह्यः । तत्र च द्रव्यत्वस्य स्वरूपतः अवच्छेदकत्वापेक्षया द्रव्यत्वत्वेन अवच्छेदकतायां गौरवम् । अतः 'द्रव्यं न' इति भेदापेक्षया 'द्रव्यत्ववन्न' इति भेदीय-प्रतियोगिता गुरुधर्मावच्छिन्ना भवति । तस्मात् द्रव्यत्वसाध्यके साध्यतावच्छेदकविशिष्टसाध्यवत्वावच्छिन्न-प्रतियोगिताकः भेदः अप्रसिद्ध इति शङ्का स्यात् । सा अत्र निराकृता ।




'द्रव्यं न' इति भेदे गृहीते द्रव्यत्वं स्वरूपतः भासते । 'द्रव्यत्ववन्न' इति भेदग्रहणे द्रव्यत्वं द्रव्यत्वत्वेन भासते इति न्यायविदः ।

**॥ दीधितिः ॥**

नहि भवति नीलो घटो घटान्य इति ॥

**॥ जागदीशी ॥**

'तद्धर्मविशिष्टबोधकपदसमभिव्याहृतेन अन्यादिपदेन उपस्थापिते अन्यत्वादौ तद्धर्मावच्छिन्नप्रतियोगिताकत्वप्रकारेणैव तादात्म्येन अन्वयो, नतु तद्धर्माश्रयप्रतियोगिताकत्वेन' इत्यत्र व्युत्पत्तौ प्राचां संवादमाह- **नहीति ॥** तादृश-व्युत्पत्त्यस्वीकारे नीलघटे पीतघटप्रतियोगिकभेदसत्त्वात् 'नीलो घटो घटान्यः' इत्यपि व्यवहारः स्यादिति भावः।

अत्र च 'द्रव्यं घटान्यत्' इत्याद्यप्रयोगात्, यन्निष्ठप्रतियोगिताकत्वेन अन्यादिपदेन भेदो बोध्यते तदवृत्तिधर्मस्यैव अनुयोगितावच्छेदकत्वात् तत एव 'घटो घटान्यः' इत्यस्य वारणसम्भवात् नीलघटत्वस्याऽनुयोगितावच्छेदकत्वानुधावनमिति मन्तव्यम्।

'नीलो घटो घटान्यः' इत्येव सम्यक् पाठः, तथैव प्रकृतोपयोगित्वसङ्गतेः। 'घटादन्यः' इति पाठस्तु साध्यवदन्येत्यत्र पञ्चमीसमासे लुप्तविभक्तिस्मारित-

---

**तद्धर्मविशिष्टेति ॥** 'पटः घटान्यः' इत्यत्र घटत्वविशिष्टघटबोधकं पदं 'घटः' इति पदम्। तत्सहोच्चरितं पदं 'अन्य' पदम्। तेन उपस्थापितं अन्यत्वं= भेदः। तस्मिन् भेदे घटपदात् लक्षणया लब्धस्य घटत्वावच्छिन्नप्रतियोगिताकस्य अभेदेन अन्वयः। न तु घटत्वाश्रयघटप्रतियोगिताकस्य।

मूलस्थनीलपदस्य कृत्यमाह- **अत्र चेति ॥**

**प्रकृतोपयोगित्वेति ॥** प्रकृतलक्षणवाक्ये 'साध्यवदन्येति' समस्तं पदं श्रूयते। तदनुसारेण 'घटान्यः' इत्युदाहरणमेव सङ्गतमित्यर्थः । **लुप्तविभक्तिस्मारितेति ॥** साध्यवदन्येत्यत्र पञ्चमी लुप्ता। तस्याः स्मरणं सम्पाद्य तदर्थे प्रतियोगित्वे 'साध्यवत्' इति पञ्चमीप्रकृतेः योऽर्थः तदवच्छेदकं यत् साध्यवत्वं तदवच्छिन्नत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः। तथा च 'घटात् अन्यः' इत्यत्र यादृशः बोधः तादृशः एव 'साध्यवदन्यः' इति लक्षणवाक्यादपि जायते इति नासङ्गतिः।

## ॥ जागदीशी ॥

प्रतियोगित्वे प्रकृत्यर्थतावच्छेदकावच्छिन्नत्वस्य संसर्गमर्यादया भानमादृत्य कथञ्चित्सङ्गमनीयः।

'घटः पटो न' इत्यादौ तु पटपदं मुख्यार्थपरमेव। न तु प्रकृत इव पटत्वावच्छिन्नप्रतियोगिताकपरम्। निपाताऽतिरिक्तस्थले एव नामार्थयोर्भेदान्वयस्य अव्युत्पन्नतया नञा उपस्थापिते भेदे पटत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेणैव पटस्य अन्वयसम्भवात्।

पटत्वावच्छिन्नप्रतियोगिताकत्वन्तु पटत्वम्, अवच्छिन्नत्वम्, प्रतियोगित्वं चेति त्रितयमेव विशेष्यविशेषणभावापन्नं संसर्गः। न तु वस्तुगत्या पटत्वावच्छिन्नं यत् प्रतियोगित्वं तन्मात्रम्। 'पटो न' इत्यत्र पटत्वावच्छिन्नत्वभानस्यापि अनुभव-

---

**कथञ्चिदिति ॥** सर्वत्र लुप्तविभक्तिस्मरणकल्पनं गौरवाय भवतीति अनेन सूचितम्। न तु 'ऋद्धस्य राजमातङ्गाः' इति प्रयोगस्य साधुत्वापत्तिः कथञ्चिदित्युक्तौ वीजम्। तत्र हि ऋद्धपदार्थस्य राजपदार्थे अभेदान्वयप्रयोजकस्य समानविभक्तिकत्वस्य अभावात् न तस्य प्रयोगस्य असामञ्जस्यम्। किं नाम? समासघटकस्य राजपदस्य समासाघटकेन ऋद्धपदेन अन्वयसाकाङ्क्षत्वेन असामर्थ्यात् समासानुपपत्त्या तादृशप्रयोगस्य दुष्टत्वम्। तच्च लुप्तविभक्तिस्मरणकल्पनेऽपि अस्त्येव। अतः गौरवमेव अस्वरसबीजं वक्तव्यम्। तदेतत् व्युत्पत्तिवादे स्पष्टम्।

**मुख्यार्थपरमेवेति ॥** अन्यपदम् नामपदम्। अतः तदर्थे अभेदेनैव अन्वयः वक्तव्यः। तेन 'पटान्यः' इत्यादौ पटपदस्य लक्षणा स्वीकार्या भवति। नञ्पदं तु निपातः। तदर्थे च भेदसम्बन्धेनापि अन्वयः वक्तुं शक्यते। अतः 'पटः न' इत्यत्र पटपदं मुख्यार्थपरम्। तदर्थस्य च नञर्थे भेदे स्वनिष्ठधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अन्वयः।

**न तु वस्तुगत्येति ॥** 'घटः पटो न' इत्यत्र नञर्थे भेदे पटस्य पटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अन्वयः इत्युक्तौ वस्तुतः पटत्वावच्छिन्ना या प्रतियोगिता तादृशप्रतियोगिता सम्बन्धः इत्यपि अर्थः सम्भावितः। तथा सति, तादृशी प्रतियोगिता

## ॥ जागदीशी ॥

सिद्धत्वात्। अन्यथा प्रतियोगिव्यक्तिभिरेव तत्तद्विशिष्टबुद्ध्युपपत्तौ पटत्वादेः तदवच्छेदकत्वमेव न स्यात्, मानाभावात्। अत एव केवलान्वयिग्रन्थे 'वह्निः नास्ति' इत्यत्र वह्नित्वं, अवच्छिन्नत्वं, प्रतियोगित्वं च संसर्गमर्यादया भासते इति स्वयमप्युक्तम्।

इत्थं च 'प्रमेयं नास्ति, कम्बुग्रीवादिमन्नास्ति' इत्यादिशाब्दबोधानां संसर्गकोटावेव प्रतियोगितायां प्रमेयत्वावच्छिन्नत्वावगाहितया भ्रमत्वम्। संसर्गप्रकारसाधारणविशेषणविशेष्यभावस्यैव भ्रमत्वघटकत्वात्। अन्यथा स्वरूपसम्बन्धेन प्रमेयत्वावच्छिन्नप्रतियोगित्वस्य अलीकतया अखण्डताद्दशसम्बन्धेन

---

प्रतियोगितात्वेन संसर्गः, न तु तत्र पटत्वं अवच्छिन्नत्वे, अवच्छिन्नत्वं च प्रतियोगितायां विशेषणतया भासते इति स्यात्। यथा 'नीलघटं जानाति' इत्युक्तौ 'घटः' इत्यपि ज्ञानस्याकारः सम्भाव्यते। तद्वत् प्रकृतेऽपि ज्ञायेत। तन्निरासार्थम् अयं ग्रन्थः। **अवच्छेदकत्वमेव न स्यादिति** ॥ पटत्वादेः अवच्छेदकत्वे 'घटः पटो न' इत्यादिप्रतीतिरेव मानम्। यदि च तत्र प्रतियोगित्वमात्रं संसर्गः, प्रतियोगितायां च पटत्वावच्छिन्नत्वं न भासते इत्युच्येत तर्हि पटत्वादेरवच्छेदकत्वे प्रमाणमेव नास्तीत्यायाति। **स्वयमुक्तमिति** ॥ दीधितिकृता उक्तम् इत्यर्थः।

**इत्थं चेति** ॥ 'पटो न' इत्यादौ पटत्वाद्यवच्छिन्नप्रतियोगितानामेव संसर्गतोपगमादेव। **भ्रमत्वमिति** ॥ प्रमेयाभावस्याप्रसिद्ध्या प्रमेयत्वस्य प्रतियोगितावच्छेदकत्वाभावः। कम्बुग्रीवादिमत्त्वस्य तु गुरुतया अवच्छेदकत्वाभावः। ननु 'तदभाववति तत्प्रकारकत्वम्' भ्रमलक्षणम्। संसर्गकोटौ च भासमानस्य न प्रकारत्वम्। अतः कथं तत्र भ्रमलक्षणसमन्वय इत्यत आह- **संसर्गप्रकारसाधारणेति** ॥ प्रकारविशेष्यभावः किञ्चित्प्रकारकज्ञानमात्रे। विशेष्य-विशेषणभावस्तु संसर्गांशेऽपि साधारण इत्यर्थः। तथा च 'तदभाववति तद्विशेषणकं ज्ञानं भ्रमः' इत्येव भ्रमलक्षणम्। तच्च संसर्गज्ञानेऽपि प्रकृते अस्तीति न दोषः।

**अन्यथेति** ॥ संसर्गांशे भ्रमत्वास्वीकारे इत्यर्थः। तथा सति 'प्रमेयं नास्ति' इत्यत्र प्रमेयपदार्थः नञ्पदार्थे अभावे प्रमेयत्वावच्छिन्न-स्वरूपसम्बन्धावच्छिन्नप्रतियोगि-

## ।। जागदीशी ।।

**प्रमेयस्य अभावे धर्मिणि अन्वयाऽसम्भवेन भ्रमत्वाऽनुपपत्तेः। सदुपरागेणाऽप्यसतः संसर्गमर्यादया भानस्य मणिकृता अनङ्गीकारात्।**

**क्लृप्तेन पटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन चाऽभावे प्रमेयस्य सत्त्वेन तादृशसम्बन्धेन भ्रमत्वस्य वक्तुमशक्यत्वात्। पटत्वादेरन्वयिताऽनवच्छेदकतया तदवच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वादिविशिष्टस्याऽन्वये निराकाङ्क्षत्वाच्च । अन्यथा घटवत्यपि 'घटो नास्ति' इत्यादेः प्रमाणत्वापत्तेः । तत्तद्घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन घटविशिष्टस्य घटविशेषाभावस्य तत्र सत्त्वात् ।**

---

ताकत्वसम्बन्धेन भासते इत्युपेयम्। तेन सम्बन्धेन प्रमेयाभाववति अभावे प्रमेयस्य प्रकारतया भानात् तस्य भ्रमत्वं चोपपादनीयम्। परन्तु तन्न सम्भवति। तादृशप्रतियोगितायाः अप्रसिद्धत्वात्। **अलीकतयेति** ।। अप्रसिद्धतयेत्यर्थः। ननु स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नतादृशप्रतियोगितात्वेन प्रतियोगितायाः अप्रसिद्धत्वेन भानासम्भवेऽपि प्रसिद्धेन प्रतियोगितात्वरूपसामान्यरूपेण भानं सम्भवत्येव। अत आह- **सदुपरागेणापीति** ।। सद्रूपेणेत्यर्थः। न हि पदार्थत्वेनापि शशविषाणं भासते।

ननु प्रमेयं नास्तीत्यत्र प्रमेयं नाम पटादिरेव। तथा च प्रमेयस्य नञ्पदार्थे अभावे पटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अन्वयः अस्तु। स च सम्बन्धः नाप्रसिद्धः इति चेत् तत्राह- **क्लृप्तेनेति** ।। सिद्धेनेत्यर्थः। **प्रमेयस्य सत्त्वेनेति** ।। पटाभावस्य प्रसिद्धतया पटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन पटरूपः प्रमेयः तस्मिन् अभावे अस्त्येव। अतः 'प्रमेयं नास्ति' इति प्रतीतेः भ्रमत्वमेव न स्यात्।

दोषान्तरञ्चाह- **पटत्वादेरिति** ।। अन्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगित्वमेव अभावे प्रतियोगिनः संसर्गः। 'प्रमेयं नास्ति' इत्यत्र च अन्वयितावच्छेदकं प्रमेयत्वं, न तु पटत्वम् । अतः पटत्वावच्छिन्नप्रतियोगित्वस्य संसर्गतया भानं व्युत्पत्तिविरुद्धम् । **निराकाङ्क्षत्वात्** ।। समभिव्याहारविशेषरूप-आकांक्षायाः अभावात् इत्यर्थः। **अन्यथेति** ।। अन्वयितावच्छेदकावच्छिन्नप्रतियोगितायाः संसर्गत्वं परित्यज्य अन्वयिवृत्तिधर्ममात्रस्य अवच्छेदकत्वस्वीकारे इत्यर्थः। **घटवत्यपीति** ।। नीलघट-

## ॥ जागदीशी ॥

एतेन, सत्तासमवायिन्यपि गुणादौ विशिष्टसत्तात्वावच्छिन्नस्य समवायेनाऽसत्त्ववत् पटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन पटत्वावच्छिन्नवतोऽपि पटाद्यभावस्य न तादृशसम्बन्धेन प्रमेयत्वावच्छिन्नवत्त्वम् । अतः 'प्रमेयं नास्ति' इत्यादौ पटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वावच्छिन्नस्यैवाऽभावांशे भ्रमत्वमित्यपि प्रत्युक्तम् । पटत्वादेः अन्वयिताऽनवच्छेदकतया तदवच्छिन्नप्रतियोगितासम्बन्धेन प्रमेयत्वविशिष्टस्याऽन्वये निराकाङ्क्षतया तथा शाब्दस्य असम्भवादिति ध्येयम् ।

---

वत्यपि। 'घटो नास्ति' इत्यत्र अभावे घटवैशिष्ट्यं भासते। नीलघटवत्यपि देशे घटनिष्ठरक्तघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटवैशिष्ट्यं अभावे अबाधितम्। अतः तादृशप्रतीतिः प्रमा स्यात्।

**एतेनेति** ॥ द्वितीयदोषकथनेनेत्यर्थः । 'प्रमेयं नास्ति' इत्यत्र पटत्वावच्छिन्नप्रतियोगित्वस्य संसर्गत्वे तादृशप्रतीतेः भ्रमत्वमेव न स्यात् इति प्रथमं दोषः प्रदर्शितः। स च दोषः परिहर्तुं शक्यते- यथा गुणे समवायेन सत्तात्वेन विशिष्टसत्तायाः सत्वेऽपि तेनैव समवायेन विशिष्टसत्तायाः विशिष्टसत्तात्वेन अभावः वर्तते । एवमेव 'प्रमेयं नास्ति' इत्यत्र अभावे पटत्वावच्छिन्नप्रतियोगिताकत्वसम्वन्धेन पटत्वावच्छिन्नस्य प्रमेयविशेषस्य सत्वेऽपि प्रमेयत्वावच्छिन्नप्रमेयः तेनैव सम्वन्धेन अभावे नास्ति । अतः कथं तस्य भ्रमत्वासम्भवः इति। यथा-



## ॥ जागदीशी ॥

'नीलो घटो नास्ति' इत्यादौ तु नीलघटत्वस्याऽन्वयितावच्छेदकत्वे तादृशधर्मावच्छिन्नप्रतियोगित्वमेव संसर्गः, न तु नीलत्व-घटत्वादिप्रत्येकधर्मावच्छिन्नप्रतियोगित्वम्। नीलपटस्य, पीतघटस्य वाऽधिकरणे तादृशप्रयोगाऽपलापापत्तेः। नीलोपलक्षितस्य घटत्वमात्रस्याऽन्वयितावच्छेदकत्वे तु घटत्वावच्छिन्नप्रतियोगित्वमेव तथा।

'संयोगेन घटो नास्ति' इत्यादौ तु तृतीयाविभक्तेः नावच्छिन्नत्वमर्थः। संसर्गीभूतप्रतियोगितायां तदन्वयाऽसम्भवात्। पदार्थापदार्थयोरन्वयस्य निराकाङ्क्षत्वात्, 'पदार्थः पदार्थेनान्वीयते' इति नियमाच्च। किन्तु अवच्छिन्नप्रतियोगिताकत्वम्, प्रतियोगित्वमात्रं वा। अवच्छिन्नत्वसंसर्गेण संयोगादेः तत्राऽन्वयादेव विशिष्टलाभसम्भवात्।

न चैवं संयोगेन घटाभावस्यैव समवायेन घटविशिष्टद्रव्यत्वाभावतया

---

**प्रत्येकेत्यादि ॥** नीलत्वावच्छिन्नप्रतियोगिता वा घटत्वावच्छिन्नप्रतियोगिता वा न संसर्गः। प्रथमस्य संसर्गत्वे नीलपटस्येति, द्वितीयस्य संसर्गत्वे पीतघटस्येति च क्रमेण अतिप्रसङ्गः।

**उपलक्षितस्येति ॥** इतरवारकत्वे सति अन्वयितानवच्छेदकत्वं उपलक्षणत्वम्। तथा च यदि नीलत्वं अन्वयितावच्छेदकतया न भासते तर्हि पीतघटवत्यपि तादृशप्रतीतेः इष्टतया केवलघटत्वावच्छिन्नप्रतियोगित्वस्यापि संसर्गत्वे न किञ्चित् बाधकमित्यर्थः।

**संसर्गीभूतप्रतियोगितायाम् इति ॥** 'संयोगेन घटः नास्ति' इत्यत्र घटपदार्थस्य नञर्थाभावे प्रतियोगितासम्बन्धेनान्वयः। संयोगेनेत्यत्र तृतीयाविभक्तेः अवच्छिन्नत्वमात्रं यद्यर्थः तर्हि पदार्थस्य तस्य संसर्गतया भासमानायाम् अपदार्थभूतायां प्रतियोगितायां अन्वयः अभ्युपेयः भवति। स च व्युत्पत्तिविरुद्धः। पदार्थः पदार्थेन अन्वेतीति व्युत्पत्तेः। **अवच्छिन्नप्रतियोगिताकत्वमिति ॥** तस्य आश्रयतासम्बन्धेन नञर्थाभावे अन्वयः। **प्रतियोगित्वमात्रमिति ॥** तस्याः निरूपकत्वसम्बन्धेन अभावे अन्वयः।

**नचैवमिति ॥** संसर्गबोधकपदोत्तरतृतीयार्थस्य अभावे अन्वयस्वीकारे इत्यर्थः।

## ॥ जागदीशी ॥

'समवायेन कपाले घटो नास्ति' इति व्यवहारापत्तिः। तृतीयान्तसमभिव्याहार-स्थले तदुपस्थाप्यप्रतियोगित्वस्यैव संसर्गतया भानस्य व्युत्पन्नत्वात्, समवाया-वच्छिन्न-घटत्वावच्छिन्नप्रतियोगिताकाभावस्य च कपाले विरहात्।

---

**घटविशिष्टद्रव्यत्वाभावतयेति ॥** वैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन। घटः द्रव्यत्वं च भूतले स्तः। अतः घटविशिष्टं भवति द्रव्यत्वम्। तदभावः घटाभावसमनियतः। अतः तावुभौ अभिन्नौ। घटविशिष्टद्रव्यत्वाभावश्च समवायावच्छिन्नप्रतियोगिताकः। अतः संयोगावच्छिन्नप्रतियोगिताकः घटाभावः समवायावच्छिन्नप्रतियोगिताकोऽपि भवति। ततश्च कपाले संयोगावच्छिन्नप्रतियोगिताकस्य घटाभावस्य सत्वात् तस्यैव च समवायावच्छिन्नप्रतियोगिताकत्वात् 'समवायेन कपाले घटो नास्तीति' प्रत्ययस्य प्रामाणिकत्वापत्तिः। यतः, अस्यार्थः 'कपाले यः घटाभावः सः समवायावच्छिन्न-प्रतियोगिताकः' इति। स च उक्तरीत्या प्रामाणिक एव।

**तदुपस्थाप्येति ॥** तृतीयान्तेन 'संयोगेन' इत्यादिपदेन उपस्थाप्या या संयोगा-वच्छिन्नप्रतियोगिता सैव घटाभावयोर्मध्ये संसर्गतया भासते। अतः 'संयोगेन घटो नास्ति' इति वाक्यात् 'घटत्वावच्छिन्ना या वस्तुतः संयोगावच्छिन्ना प्रतियोगिता, तेन सम्बन्धेन घटविशिष्टोऽभावः' इति बोधः जायते।




एवं च कपाले समवायावच्छिन्न-घटविशिष्टद्रव्यत्वत्वावच्छिन्नप्रतियोगिता-सम्बन्धेन द्रव्यत्वविशिष्टोऽभावोऽस्ति। एवं संयोगावच्छिन्नघटत्वावच्छिन्नप्रति-

## ॥ जागदीशी ॥

अस्तु वा, घटत्वावच्छिन्नत्वस्येव संयोगसम्बन्धावच्छिन्नत्वस्यापि प्रतियोगित्वांशे संसर्गमर्यादयैव भानम्, तृतीयान्तसमभिव्याहारस्य नियामकत्वाच्च नातिप्रसङ्गः।

'घटाऽनधिकरणं भूतलम्' इत्यादौ तु लक्षणयाऽधिकरणपदमेव घटाधिकरणार्थकम्, घटपदं तात्पर्यग्राहकम्। अन्यथाऽनधिकरणपदेनाऽधिकरणसामान्यभिन्नत्वोक्तौ भूतले तस्य बाधः स्यात्। नच घटान्वितस्यैवाऽधिकरणस्य भेदः तत्र नञा बोधनीयः, समासान्तर्गतनञामुत्तरपदार्थमात्रान्वयित्वव्युत्पत्तेः। अन्यथा 'नीलाऽघटो घटः' इत्यादौ नीलघटान्यस्य घटत्वं 'नीलाऽप्रमेयः पटः' इत्यादौ च नीलप्रमेयान्यस्य पटत्वं प्रतीयेत।

---

योगितासम्बन्धेन घटविशिष्टोऽभावोऽस्ति। न तु समवायावच्छिन्नघटत्वावच्छिन्नप्रतियोगितासम्बन्धेन घटविशिष्टोऽभावः। अतः न कपाले 'समवायेन घटो नास्ति' इति बुद्धिप्रसङ्गः।

**अस्तु वेति ॥** प्रथमपक्षे तृतीयान्तपदोपस्थाप्यं संयोगाद्यवच्छिन्नप्रतियोगित्वं तदनुपस्थाप्यं घटत्वाद्यवच्छिन्नत्वेन भासमानम् अभावे घटादेः सम्बन्धः। अस्मिन् पक्षे तु संयोगावच्छिन्नत्वेन घटत्वावच्छिन्नत्वेन च भासमानं प्रतियोगित्वं सम्बन्धः। तृतीयान्तपदं तात्पर्यग्राहकम् इति विशेषः।

| पदम् | संयोगेन | घटः | न | अस्ति। |
|---|---|---|---|---|
| | | ↓ | ↓ | |
| अर्थः | - | घटत्वविशिष्टः | अभावः | |
| संसर्गः | - | संयोगावच्छिन्न-घटत्वावच्छिन्न-प्रतियोगिता | | |

**घटानधिकरणमिति ॥** न अधिकरणं= अनधिकरणं इति समासे अधिकरणभेदः प्रतीयते। स च भूतले बाधितः। 'घटानधिकरणम्' इति समस्तपदे मध्ये तिष्ठति

## ॥ जागदीशी ॥

वस्तुतः ससम्बन्धिकपदस्थले व्युत्पत्तिवैचित्र्यात् 'प्रतियोगिताऽनवच्छेदकम्' 'घटाऽनधिकरणं भूतलम्' इत्यादौ घटाद्यन्वितस्यैवाऽधिकरणादेर्भेदो भासते, अन्यत्र त्रिपदतत्पुरुषाऽनुपगमेऽपि 'घटस्य नाऽधिकरणम्' 'प्रतियोगिताया नाऽवच्छेदकम्' इत्यादिरीत्या त्रिपदतत्पुरुषेण विशिष्टलाभसम्भवादिति तु परमार्थः।

'पीतः शङ्खो नास्ति' इत्यादौ शाब्दबोधस्तु न शङ्खत्वावच्छिन्नतया प्रतियोगित्वमवगाहते। तन्मात्रस्याऽन्वयिताऽनवच्छेदकत्वात्। शङ्खवत्तया निश्चिते धर्मिण्यपि तादृशप्रयोगात्। परन्तु पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वेन संसर्गमर्यादया प्रतियोगित्वमवगाहते। नञादिपदानां यद्धर्मविशिष्टवैशिष्ट्यावगाहि-स्वोपस्थाप्याभावधर्मिकाऽन्वयबोधजनकत्वं तद्धर्मावच्छिन्नप्रतियोगितात्वेन प्रतियोगितासंसर्गकाऽन्वयबोधजनकत्वव्युत्पत्तेः।

---

नञ्पदम्। तस्य स्वोत्तरपदार्थे अधिकरणे एव अन्वयः वक्तव्यः, न तु पूर्वपदार्थघटान्विताधिकरणे। तथा सति 'नीलाघटः घटः' इति प्रयोगः प्रामाणिकः स्यात्। स हि अप्रामाणिकत्वेन प्रसिद्धः। यतः 'न घटः= अघटः। नीलश्चासौ अघटश्च = नीलाघटः' इति तत्र समासः। तेन च 'घटभिन्नः(अघटः) यः नीलः सः घटः' इति बोधः भवति। स च अप्रामाणिकः। घटभिन्नः नीलः= नीलपटः। तस्मिंश्च घटत्वं बाधितम्। एवं 'नीलाप्रमेयः पटः' इत्यत्रापि 'प्रमेयभिन्नः यः नीलः सः पटः' इति बोधो जायते। सोऽपि अप्रामाणिकः। प्रमेयभिन्नस्य नीलस्यैव अप्रसिद्धत्वात्। यदि पुनः पूर्वपदार्थान्वित-उत्तरपदार्थे नञर्थस्यान्वयः तर्हि तत्रापि 'नीलप्रमेयभिन्नः (रक्तपटः) यः सः पटः' 'नीलघटभिन्नः यः (पीतघटः) सः घटः' इति बोधः स्यात्। स च प्रामाणिकः एव। तथा च तादृशप्रयोगद्वयस्य प्रामाणिकत्वं स्यात्। तयोः अप्रामाणिकत्वोपपादनार्थं नञः उत्तरपदार्थमात्रान्वयित्वव्युत्पत्तिरङ्गीकर्तव्या।

**इति परमार्थः इति** ॥ व्याप्तिलक्षणे 'प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकम्' इत्यत्र जगदीशेन त्रिपदतत्पुरुषः एव अङ्गीकृतः अवच्छेदकत्वनिरुक्तौ।

## ॥ जागदीशी ॥

इयांस्तु विशेषः। यत् 'घटो नास्ति' इत्यादिशाब्दबोधे सांसर्गिकी प्रतियोगित्वावगाहिता प्रसिद्धेन घटत्वावच्छिन्नप्रतियोगितात्वेन निरूपिता, 'पीतः शङ्खो नास्ति' इत्यादौ तु पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वेनाऽप्रसिद्धेनैवेत्यादिकं बहुतरमूहनीयम्।

## ॥ इति जागदीशी पञ्चलक्षणी सम्पूर्णा ॥

---

**धर्मिण्यपीति ॥** शङ्खवति भूतले 'पीतः शङ्खो नास्ति' इति प्रतीतेः प्रामाणिकत्वात् इत्यर्थः। **नञादिपदानामिति ॥** अत्र स्वपदेन नञ् गृह्यते। तेन उपस्थाप्यः यः अभावः सः एव नञ्घटितवाक्यजन्यशाब्दबोधे विशेष्यः। तत्र प्रतियोगिवैशिष्ट्यं भासते। तत्र प्रतियोगिवाचकपदात् यद्धर्मावच्छिन्नः उपस्थापितः तद्धर्मावच्छिन्नप्रतियोगितैव संसर्गः। यथा- 'घटः नास्ति' इत्यत्र नञर्थे अभावे घटत्वविशिष्टघटस्य वैशिष्ट्यं भासते। तयोश्च घटत्वावच्छिन्नप्रतियोगित्वं तादृशप्रतियोगितात्वेन संसर्गः। तुल्ययुक्त्या 'पीतः शङ्खो नास्ति' इत्यत्रापि पीतशङ्खात्वावच्छिन्नप्रतियोगित्वं तादृशप्रतियोगितात्वेन संसर्गः।

**अवगाहितेति ॥** सांसर्गिकविषयितेत्यर्थः। ज्ञाननिष्ठा सा तादृशप्रतियोगितात्वनिष्ठा या निरूपकता तन्निरूपितेत्यर्थः।

**श्री श्रीशस्य कृपासिन्धोः विश्वेशाख्ययतेस्तथा।**
**करुणादृष्टिपूतेन व्याख्यैषा रचिता मया ॥**

*॥ इति पञ्चलक्षणी-जागदीशीव्याख्या ॥*